रा— नैष्फल्यादिनाऽननुष्ठानमितिभ्रान्तिं शङ्काव्याजेन निरस्य-न्न्यूनतादोषं परिहरति ॥ नन्वित्यादिना ॥ प्रकरणस्यादावित्यर्थः। प्रेक्षा-वद्भिः व्यासजैमिनिप्रभृतिभिः अथातो ब्रह्मजिज्ञासेत्यादाविति भावः। ॥ परिसमाप्त्यादीति ॥ प्रचय आदिशब्दार्थः। (मङ्गलमनुष्ठितमेवे-त्येतदयुक्तम्। प्रकरणादौ मङ्गलानुष्ठानस्य ग्रन्थे निवेशनाभावादि-त्यत आह) ॥ मानसादेरिति ॥ हरिस्मृतिनमउक्तिदण्डवत्प्रणामादे-रित्यर्थः। परबुद्धेरप्रत्यक्षत्वादाह ॥ तच्चेति ॥ मानसाद्यनुष्ठान-मित्यर्थः। (किञ्च मङ्गलानुष्ठानसाधकं ग्रन्थे निवेशनमप्यस्तीत्याह ॥) ॥ यच्चेति ॥ किञ्चेति चार्थः। यत्करोतीत्यन्वयः। आदिपदेन भगव-त्वग्रहः। एतेन शिष्यशिक्षार्थं निबन्धनस्याप्यावश्यकत्वान्न्यूनतेत्य-पास्तम्। ननु विभागेनोद्दिश्य विशिष्यनिर्देशपरमिदं कथं मङ्गलार्थं स्यादित्यत आह ॥ अन्यपरमपीति ॥ तत्रेति ॥ मुमुक्षुणाङ्गाङ्गिभावेन ज्ञातव्यतया तत्त्वद्वये अवश्यं वाच्ये सतीति वा शास्त्रविषयादिना विषयादिमत्वे सिद्धे सतीति वा समङ्गलत्वेन प्रकरणस्यारम्भणीयत्वे सिद्धे सतीति वा सामान्यविशेषविभागोद्देशादिषु मध्ये इति वार्थः। विशेषविभागादिः पश्चादिति तावच्छब्दः। तत्त्वं द्विविधमिति सामा-न्यतो विभागः। स्वतन्त्रमस्वतन्त्रश्चेति सामान्यत उद्देश इति विवेकः। विभागेनेति हेतौ तृतीया।

---

वि—निबद्धस्यैव नमस्कारादेर्मङ्गलत्वं मन्वानः शङ्कते ॥ नन्विति। निबद्धस्यैव मङ्गलत्वं नेत्यभिप्रेत्य परिहरति ॥ उच्यत इति ॥ निबद्धस्यैव मङ्गलत्वमभिप्रेत्याह ॥ यच्चायमिति ॥ स्वभावात्–सामर्थ्यात्।

रो—किञ्च किमिदं ग्रन्थनिवेशनं नाम, किं मङ्गलत्ववाचकशब्द-प्रयोगः? ग्रन्थादौ मङ्गलात्मकशब्दनिवेशोवा? नाद्यः—मायावादखण्ड-नादौ स्तौमीत्येवमनुक्तावपि नृसिंहस्तुत्यात्मकमङ्गलानुष्ठानस्य ज्ञात-त्वात्। द्वितीयेतु–प्रकृतेप्यस्तीत्याह ॥ यच्चायमिति ॥

श्री— मङ्गलं-नानुष्ठेयं-निष्फलत्वात्-इति वा-समाप्त्यादीतर फलकत्वाद्वा-इति विकल्प्याद्यमनूद्य दूषयति ॥ नतावत्तदिति ॥ ॥ प्रेक्षावद्भिरिति ॥ तथा च मङ्गलं-सफलं-प्रेक्षावद्भिरनुष्ठितत्वात्-कृष्यादिवत्-इति अनुमानादित्यर्थः। अत्र कदाचित्केनचित्प्रेक्षावता

---

ननु युज्यते नृसिंहस्तुत्यात्मकशब्दनिवेशस्य मङ्गलानुष्ठानत्वादिकं, स्तुतिरूपमङ्गलत्वेनैव तन्निवेशात्, स्वातन्त्र्यादिसङ्कीर्तनस्य-तु पदार्थान्वयप्रतीत्यर्थं कृतस्य कथं मङ्गलत्वमित्यत आह—अन्यपरमपीति ॥ सूत्रादौ अथशब्दादिकमिवेत्यर्थः।

स—क्रिमपि—कायिकवाचिकमानसिकान्यतममपि।

(ननु प्रकरणादौ मङ्गलाचरणमितिपाठमाश्रित्य आचरणशब्दार्थः कथितः) आचर्यते ज्ञाप्यतेऽनेनेत्याचरणम्।

प्रेक्षावद्भिरिति ॥ प्रेक्षा येष्वस्ति ते तथा। तैर्ज्ञानिभिः।

अखिलमङ्गलानि ॥ प्रयोजनप्रापकत्वेन मङ्गलानामखिलता। खिलानि-अफलपर्यवसायित्वात् अदृढान्युच्यन्ते तथाविधानि न भवन्तीत्यखिलानि। फलपर्यवसायीनीतियावत्। बहुवचनेन विघ्नानां बाहुविध्यात् तत्समसंख्यत्वेन तदुत्पाटनपाटवं प्रकटीचकारेति ज्ञेयम्।

सम्पादयति ॥ सम्यगुपार्जयति। अन्यार्थं नीयमानस्याप्यम्भःकुम्भादेरन्येषां मङ्गलसूचकत्वदर्शनादिति भावः। वृद्धिरादैच्, अथातो ब्रह्मजिज्ञासा, अथातो धर्मजिज्ञासा, अथ शब्दानुशासनं, सिद्धे शब्दार्थे सम्बन्धः" इत्येवमादिबहुस्थलेषु संज्ञानन्तर्याद्यभिधायकानामपि वृध्यादिशब्दानां मङ्गलार्थताया अपि चिरन्तनव्याख्यातृभिः व्याख्यातत्वान्नेयं व्याख्या अदृष्टचरीति कौतुकिभिर्भाव्यमिति इति शब्देन शङ्कापरिहारसमाप्तिसूचकेन सूचयामासेति ध्येयम्।

का—मानसादेरपीति ॥स्यादेवम्। यदि नमस्कारादिनिबन्धनमेव मङ्गलं स्यात्। नत्वेवम्। भगवदुत्कर्षविषयीकारिज्ञानकर्मशब्दात्मकतया तस्य त्रैविध्यात्। प्रकृते चास्मदादिप्रत्यक्षायोग्यज्ञानादिरूपमङ्गलत्वान्नोक्तदोष इति भावः। अत्र मानसस्यैव मुख्यत्वात् मुखतो ग्रहणम्।

कृते निष्फले जलताडनादौ व्यभिचारवारणाय प्रेक्षावद्भिरिति बहुवचन-प्रयोग इति द्रष्टव्यम्। द्वितीयमनूद्य दूषयति ॥ नापीति ॥ समाप्त्या-दीत्यादिपदेन विघ्नाभावप्रचययोर्ग्रहणम् ॥ अनुष्ठितत्वादिति ॥ समाप्तिकामैरिति शेषः। प्रेक्षावद्भिरिति वर्तते। तथा च न मङ्गलं-समाप्त्यादीतरफलकं-ग्रन्थादौ निर्विघ्नेन तत्परिसमाप्त्यादिकामैः प्रेक्षा-वद्भिर्नियमेनानुष्ठीयमानत्वात्। यद्यत्कामैः प्रेक्षावद्भिर्नियमेनानुष्ठीयते तत्तत्फलकम्। यथा तृप्तिकामैरनुष्ठीयमानं भोजनं तत्फलकमिति प्रयोगो द्रष्टव्यः। ननु कथं भगवता मङ्गलमनुष्ठितमित्युच्यते। ग्रन्थे निवेशनाभावस्य प्रत्यक्षसिद्धत्वादिति चेन्न नहि ग्रन्थे निवेशनमेव मङ्गलम्। नापि मङ्गलव्यापकम्। मानसादेरनेकमङ्गलस्य सत्वात्। अतो न ग्रन्थे निवेशनाभावेन मङ्गलानुष्ठानाभावो मन्तव्य इत्याशयवा-नाह ॥ मानसादेरपीति ॥ मनोवाक्कायकृतस्येत्यर्थः। ननु भगवता मङ्गलं नानुष्ठितमेवेत्यवधारयितुं शक्यत एव। मानसादिनमस्काररूप-मङ्गलस्य सम्भावितत्वेऽपि तन्निश्चायकप्रमाणाभावादित्यत आह ॥ ॥तच्चेति॥ मानसादिनमस्काररूपमङ्गलमित्यर्थः। अनुमीयतेचेति संबंधः तथा च न केवलं सम्भावितं किन्तु भगवतः परमास्तिकत्वाद्धेतो-र्मङ्गलं भगवताकृतमित्यनुमीयतेचेत्यनुमा प्रमाणमस्तीत्यर्थः। (प्रयोग-प्रकारस्तु अयं ग्रन्थः-मङ्गलोपेतः-परमास्तिकेन कृतत्वात्-प्रमाण-लक्षणादिवदिति द्रष्टव्यः।) किञ्च ग्रन्थनिवेशनाभावोऽप्यसिद्ध इत्याह ॥ यच्चायमिति ॥ किं ततोऽन्यदिति ॥ विष्णोस्सङ्कीर्तनादन्यदित्यर्थः ॥मङ्गलं नामेति॥ पवित्राणां पवित्रं यो मङ्गलानाञ्च मङ्गलमिति वचनेन विष्णोः परममङ्गलत्वावगमात्तत्सङ्कीर्तनमेव परममङ्गलमित्यर्थः। ननु स्वातन्त्र्यादिविशिष्टस्य विष्णोरादितस्सङ्कीर्तनस्य सामान्यतस्तत्त्व-विभागोद्देशपरत्वात्कथं मङ्गलपरत्वमित्यत आह ॥ अन्यपरमपीति ॥ तत्स्वातन्त्र्यादिविशिष्टस्य विष्णोरादितस्सङ्कीर्तनम् ॥ अखिलमङ्गला-नीति ॥ मङ्गलकार्यसमाप्त्यादीनीत्यर्थः। यथा हिमनिवारणार्थमुत्पा-

टीका—

तत्त्वमनारोपितम् । प्रमितिविषय इति यावत् । तेन तस्य-भावस्तत्वमित्यादिखण्डनानवकाशः ।

---

दितो दहनः स्वभावात्प्रकाशनमपि करोति तद्वदिति भावः ।। तत्रेति ।। बुद्धिस्थानां सामान्यविशेषविषयाणामुद्देशविभागलक्षणपरीक्षाणां मध्य इत्यर्थः। यद्वा तत्त्वे सङ्गृह्य निरूपणीय इत्यर्थः। विभागेन सङ्गृह्य तत्व-निरूपणस्य प्रकरणावान्तरप्रयोजनत्वेन प्रागुक्तत्वात्। निरूपणस्यचो-द्देशात्मकत्वेन तादृशे तत्वस्य निरूपणे कर्तव्ये आदौ तावत्सामान्यतो विभागोद्देशावाहेति भावः ।

रा — ननु किं तत्त्वपदेन विवक्षितम्। तस्य भावस्तत्त्वमिति चेत् तच्छब्दार्थानिरुक्तिः। तच्छब्दपरामर्शविषयस्य प्रकृतस्य कस्य-चिदभावात्। भावपदोक्तधर्मस्यैव प्राप्त्या धर्मिणोऽप्राप्तिश्चेत्यत आह ।। तत्त्वमनारोपितमिति ।। एवं तर्हि कूर्मरोमादेः प्रधानस्याप्रसिद्ध्या काप्यारोपाभावेन तदपि तत्त्वमिति प्रसज्येत इत्यत उक्तम् ।। प्रमिति विषय इति यावदिति।। साक्षात्प्रमितिविषय इति वा विधिप्रमितिविषय इति वा अस्यार्थो ध्येयः। कूर्मरोमादि नास्तीतिनिषेधप्रतीतिविषयत्वेऽपि कूर्मरोमास्तीति वाक्याभासजन्यविधिप्रत्ययविषयत्वेऽपि वा न दोषो भवति ।। इत्यादीति ।। इत्यादिविकल्पपूर्वकखण्डनानवकाश इत्यर्थः।

श्री — ननु तत्त्वसामान्यलक्षणमनभिधाय विभागः क्रियत इति न्यूनतेत्यत आह ।। तत्वमनारोपितमिति ।। तथा च तत्त्वमित्यनु-वादेनैव लक्षणमपि सूचितमिति भावः। नन्वारोपाविषयत्वं प्रधाना-भावेनानारोपिते कूर्मरोमाद्यसद्विशेषेऽतिव्याप्तमित्यत आह ।। प्रमिति-विषय इति ।। ननु कूर्मरोमादिकं ज्ञातं वा नवा। न चेत्कातिव्याप्तिः। ज्ञातश्चेदारोपविषयत्वमेवेति नातिव्याप्तिः। यदि च नारोपविषयः अथ च ज्ञातं तदा प्रमितमेवेत्यतिव्याप्तितादवस्थ्यमितिचेन्न। यस्यासद्विशेषस्य

कदाचिदपि नारोपः किन्त्वसत्त्वेनैव ज्ञानं तत्रारोपाविषयत्वसत्त्वेनाति व्याप्तिसम्भवात्। न च तत्र प्रमितिविषयत्वमपि प्राप्तमिति वाच्यम्। असत्त्वप्रकारकप्रमितिविषयत्वेऽपि सत्त्वप्रकारकप्रमितिविषयत्वस्य तत्राभावात्। लक्षणस्य तथा विवक्षितत्वात्। अत्र साक्षादित्यपि विशेषणीयम्। अतो न भ्रमविषयकानुव्यवसायादिविषये रजतादावतिव्याप्तिः। ननु धर्म्यंशे प्रमात्वेन तद्विषये प्रकारत्वांशेऽतिव्याप्तिरिति चेन्न। यदंशे ज्ञानस्य प्रमितत्वं तदंशविषयकत्वस्यैव विवक्षितत्वात्। भ्रमप्रकारे च तदंशविषयत्वाभावादितिदिक्। तत्त्वशब्दस्योक्तार्थत्वेन न खण्डनदूषणावकाश इत्याह ॥ तेनेति ॥ 'तस्यभावस्त्वतलौ' इति सूत्रात्तत्त्वमित्यत्र तस्य भावस्तत्त्वमित्यर्थः। तत्त्वं स्वतन्त्रास्वतन्त्रभेदेन द्विविध-

---

वि—ननु अनारोपितं आरोपाविषयः भ्रमाविषय इति यावत्। नहि भ्रमाविषयः कश्चित्प्रसिद्धोऽस्तीत्याशङ्कानिरासायाह। ॥ प्रमितिविषय इतीति॥ सर्वांशे प्रमाविषय इत्यर्थः। स्वतन्त्रस्यान्याधर्मतया तत्त्वतया तत्त्वं न स्यादिति खण्डनानवकाश इत्यर्थः।

रो—तथा च एतत्समानार्थतया तत्त्वविवेकोक्तस्य तत्त्वलक्षणस्य साक्षित्वमपि सङ्गच्छत इति भावेनाह ॥प्रमितिविषय इति यावदिति॥ एतदेवाभिप्रेत्योक्तं, तत्त्वविवेकटीकायां 'अनारोपितं हि तत्त्वमित्यादिना साक्षादसत्त्वादि प्रकारकप्रमाविषये तच्च प्रमेयमितिचैकोऽर्थे' इत्यन्तेन।

स—अस्य लक्षणस्य पर्यवसितमर्थमाह ॥ प्रमितिविषय इति यावदिति ॥ प्रमितिविषयइत्येतावद्यावदर्थजातं वक्ति तावदर्थजातं प्रतीतत्वे सति आरोपाविषयत्वमित्यस्यार्थ इत्यर्थः। नन्वसतोऽपि प्रमितिविषयत्वात्तत्रातिव्याप्तिरितिचेन्न। द्विविधं विषयत्वम्। ज्ञानासाधारणकारणसन्निकर्षाश्रयत्वरूपं, उल्लेख्यत्वरूपञ्चेति। तत्राद्यं नासत्यस्तीति नातिव्याप्तिः। द्वितीये सत्त्वप्रकारकेति विशेषणान्नतत्रैवातिव्याप्तिः एतेनासतोऽपि ज्ञानविषयत्वस्य भगवत्पादैस्तत्र तत्रोक्तत्वात्कथं प्रतीतत्व विशेषणेन तन्निरास इति शङ्कानिरासः ॥तेनेति॥ तेन रूढतत्त्वशब्दस्य पारिभाषिकलक्षणकथनेनेत्यर्थः। आदिपदेन सचासौत्वश्चेत्यादिविग्रहग्रहः। अखण्डपदत्वाभ्युपगमादिति भावः।

टीका—

ननु शुक्तिरजतादिकं कथं न तत्त्वम्। न हि धर्मी वा रजतत्वं वा न प्रमेयम्। नापि तयोस्सम्बन्धः। शुक्तिव्यक्तौ रजतत्वस्य स नास्तीति चेन्माभूत्। न हि गृहे देवदत्तो नास्तीत्येतावता न प्रमेय इति।

---

मित्यसङ्गतम्। धर्मिभूते तत्त्वे घटादावव्याप्तिश्चेतिदूषणानवकाशः। अनारोपितं तत्त्वमित्यभिप्रेतत्वेन त्वदीयदूषणस्य छलत्वादिति भावः।

रा—न्यायमतावष्टम्भेन खण्डनकृदुक्तखण्डनं शङ्कित्वा सिद्धांतदिशोत्तरमाह ॥ नन्वित्यादिना ॥ नायं दोष इत्यन्तेन ॥ धर्मीवेति ॥ रजतंवेत्यर्थः। पट्टणादौ रजतस्य तत्र रजतत्वस्यचानुभवात्तस्यैव सत्यरजतस्यान्यत्रारोपादिति भावः। प्रमेयं प्रमाविषय इत्यर्थः। तादात्म्यारोपाभिप्रायेण धर्मीवेति। संसर्गारोपाभिप्रायेण रजतत्वं वेत्युक्तम्॥ ॥ तयोरिति ॥ रजतरजतत्वयोस्सम्बन्धः तादात्म्यरूपः संसर्गरूपोवा प्रमेय इत्यनुषङ्गः। सत्यरजते तस्य प्रमीयमाणत्वात्तस्यैव च शुक्तौ प्रतीत्यभ्युपगमादिति भावः। शङ्कते ॥ शुक्तीति ॥ स इति ॥ सम्बन्ध इत्यर्थः।

श्री—ननु इदं रजतमिति भ्रमविषयस्य (सत्वे) सर्वस्य सत्वेन व्यावर्त्याभावात्प्रेति पदं व्यर्थमिति भावेन शङ्कते ॥ नन्विति ॥ तदुपपादयति ॥ न हीति ॥ सम्बन्धः समवायरूपः। न प्रमेयमित्यनुवर्तते।

---

वि—सिद्धान्तिनं नैयायिकं मत्वा शङ्कते ॥ नन्विति ॥ शुक्तिरजतादेरपि देशान्तरे सर्वांशप्रमाविषयत्वादिति भावः।

स—॥ नहीति ॥ इदं रजतमिति प्रतीतौ संसर्गारोपपक्षे धर्मी शुक्तिकादिः। प्रकारस्तु रजतत्वं संबन्धः समवायः। तादात्म्यारोपपक्षे धर्मीतूक्तएव। प्रकारस्तु रजतम्। तादत्म्यं संबन्धः। एवञ्च धर्मी शुक्तिशकलं न प्रमेयमिति न किन्तु प्रमेयमेवेत्यर्थः। तथा रजतत्वं न प्रमेयमिति न। किन्तु प्रमेयमेवेत्यर्थः। तयोः शुक्तिरजतत्वयोः संबन्धः समवायलक्षणः। न प्रमेय इति विपरिणमितलिङ्गेन नञन्वेति।

टीका—

स्यादिदमारोपितस्यान्यत्र सत्तामभ्युपगच्छतां दूषणम् । अत्यन्तासदेव रजतं दोषवशाच्छुक्तिकायामारोप्यत इति वादे तु नायं दोषः । एतेन भाविपाकरागः कुम्भः श्यामतादशायां रक्तपित्तिना रक्ततयोपलभ्यमानस्तत्त्वं स्यादित्यपि परास्तम् । भाविनः प्रमेयत्वेऽपि पूर्व (स्यातथात्वात् ।) स्य तथात्वाभावात् । धर्मिणस्त (थाभा) त्वभावाङ्गीकारादिति ।

---

आपणस्थे रजते रजतत्वाद्यः सत्वादिति भावः । स सम्बन्धः ।। न हि गृह इति ।। किन्त्वन्यत्र सत्वात्प्रमितिविषय एवेत्यर्थः । तद्वत्प्रकृतेऽपीति भावः ।

रा—।। नायं दोष इति ।। आरोपितस्य प्रमेयत्वप्रसङ्गदोषो नेत्यर्थः । अन्यदपि खण्डनोक्तं निराह ।। एतेनेति ।। अत्यन्तासत एव भ्रान्तौ भानाभ्युपगमेनेत्यर्थः ।। तत्वं स्यादिति ।। तत्र रागसम्बन्धस्य सत्वादिति भावः ।। अतथात्वादिति ।। अत्यन्तासत्वेन तस्य प्रमाविषयत्वाभावादिति भावः । धर्मी घटोप्यप्रमेयः किमित्यत आह ।। धर्मिण इति ।।

श्री—भ्रमविषयस्य रजतस्यात्यन्तासत्वाङ्गीकारात्तद्व्यावृत्त्यै प्रतिपदं सार्थकमित्याशयेनाह ।। स्यादिदमिति ।। अभ्युपगच्छतां तार्किकाणाम् । अन्यत्र विद्यमानमेवान्यत्रारोप्यत इति तैरङ्गीकृतत्वादिति भावः। रक्तपित्तिर्नाम कश्चिन्नेत्रदोषः । तेनेत्यर्थः ।। तत्वंस्यादिति ।। रक्तत्वप्रकारकप्रमितिविषयत्वादित्यर्थः । कथं प्रमितिविषयत्वमित्यतः तदुपपादनार्थमुक्तं भाविपाकराग इति । पाकस्तेजस्संयोगः । तथा च भावी यः पाकः तेन रागो रक्तरूपवानित्यर्थः । तथा च पाकेन रक्ततायाः उत्तरत्र जनिष्यमाणत्वेन सत्यत्वादिति भावः । भाविनः भाविपाकरागस्य कुम्भस्य । पूर्वस्य श्यामतादशायां रक्ततयोपलभ्यमानस्यातथात्वात् प्रमित्यविषयत्वात् । कुत इत्यत आह ।।धर्मिणः तथाभावादिति।। अत्राकारश्लेषः कार्यः । तथा च रक्तत्वेनाभावादित्यर्थः । तथा च

श्यामतादशायां रक्तत्वस्यात्यन्तासत्वान्न प्रमेयत्वमिति भावः। यद्वा श्यामतादशायां रक्तःकुम्भ इति ज्ञानस्यापि धर्म्यंशे प्रमात्वात्तदंशे प्रमाविषयत्वमस्तीत्यतिव्याप्तिरेवेतिचेत्तत्राह ॥ धर्मिण इति ॥ अत्राकारप्रश्लेषो न कार्यः। तथाभावात्। तत्वरूपतासद्भावादित्यर्थः। तथा च लक्ष्यत्वान्न तत्रातिव्याप्तिरिति भावः। अत एव क्वचिद्धर्मिणस्तत्वभावाङ्गीकारादित्यपि पाठः।

वि—अभ्युपगच्छतां नैयायिकानामिति शेषः।

नन्वत्यन्तासद्रजतं न प्रतीयेत; तत्सामग्रीविरहादिति चेन्न। विशेषादर्शनभेदाग्रहशुक्तीन्द्रियसन्निकर्षादिरूपायाः दोषघटितायाः सामग्र्याः सत्वात्। न च रजतसाक्षात्कारत्वेन रजतेन्द्रियसंयोगत्वेन कार्यकारणभावावधारणात्प्रकृते च रजतसंयोगाभावात्कथं रजतसाक्षात्कारस्स्यादिति वाच्यम्। रजतजन्य एव साक्षात्कारे रजतेन्द्रियसंयोगस्य कारणत्वात्। प्रकृते च तदभावात्। अन्यथा अन्यथाख्यातिवादेऽप्यगतेः। तर्ह्यन्यथाख्यातिरेवास्तु, अविशेषादिति चेन्न। उक्तविशेषसामग्रीबलेन प्रमाणसिद्धरजतविलक्षणरजतस्यैव भ्रमविषयतया आवश्यकत्वेनान्यथाख्यातिवादस्य विशेषात्। अत एव 'एतावन्तं कालं शुक्तिरेवात्यन्तासद्रजतात्मना प्रत्यभात्' इत्युत्तरकालपरामर्शोऽप्युपपद्यते।

तथात्वाभावात् ॥ तत्रावच्छेदेन सर्वांशप्रमाविषयत्वाभावात्।

काशी—ननु असतः कथं प्रतीतिः सन्निकर्षाभावात्। न च कथमन्यत्र सतोऽपि प्रतीतिः संयोगादिसन्निकर्षाभावादिति वाच्यम्। ज्ञानलक्षणसन्निकर्षस्वीकारात्। असतश्च पूर्वमनुपस्थितत्वेन तदयोगादित्याशङ्क्योक्तं दोषवशादिति। अयं भावः। अपूर्वसन्निकर्षकल्पनापेक्षया रजतसादृश्यादिदोषसहकृतशुक्तिसन्निकर्षस्यैव रजतावभासकत्वं युक्तम्।

नचासतस्तद्ज्ञानजनकसन्निकर्षाश्रयत्वलक्षणविषयत्वायोगः तदभावेऽपि उल्लेख्यत्वरूपविषयत्वोपपत्तेरिति। एवञ्च प्रशब्दाभावे भ्रमविषयविशिष्टेऽप्यतिव्याप्तिर्बोध्या। सिद्धान्ते विशिष्टस्याप्यतिरिक्तत्वात्। अत एव तत्त्वविवेकटीकायामुल्लिखितम्। 'विशिष्टमतत्त्वमेवेति' इत्युक्तमितिदिक् ॥

टीका—

तद्द्विविधम् ॥ स्वतन्त्रमस्वतन्त्रश्चेतीति शब्दाध्याहारेण योज्यम् । अन्यथा स्वतन्त्रमस्वतन्त्रञ्च तत्त्वं प्रत्येकं द्विविधमिति प्रतीतिःस्यात् । स्वरूपप्रमितिप्रवृत्तिलक्षणसत्तात्रैविध्ये परानपेक्षं स्वतन्त्रम् । परापेक्षमस्वतन्त्रम् । तदुपपादनायोक्तमिष्यत इति । प्रामाणिकैरिति शेषः ॥ तथाहि यदि तत्त्वमेव नास्तीति ब्रूयात् तदा प्रत्यक्षादिविरोधः । (सा भ्रान्तिरिति चेन्न ।) भ्रान्तिः सा इति चेन्न । बाधकाभावात् । न च निरधिष्ठाना भ्रान्तिरस्ति । नापि निरवधिको बाधः । नास्त्येव तत्त्वमित्यस्यार्थस्य प्रमितत्वाप्रमितत्वयोर्व्याघातश्च । यदि चैकमेवतत्त्वं तदा भेदोपलम्भविरोधः । तद्भ्रान्तितायाञ्च बाधकं वाच्यम् । तच्चान्यत्रनिरस्तम् ।

---

रा—केचित्स्वरूपमेव धर्मिणः सत्तामाहुः । अन्ये प्रमितिम् । अपरे प्रवृत्तिम् । अतो मतत्रयानुरोधेनाह ॥ स्वरूपेत्यादि ॥ तदुपपादनायेति ॥ स्वातन्त्र्यपारतन्त्र्यभेदेन तत्त्वद्वैविध्योपपादनायेत्यर्थः । ॥ सा भ्रान्तिरिति ॥ विधेयापेक्षया स्त्रीलिङ्गोक्तिः । घटःसन् पटःसन् इत्यादिप्रत्यक्षादिरित्यर्थः । भ्रान्तिबाधावङ्गीकुर्वाणेनापि आरोपाधिष्ठानत्वेन इदं एवंनेति बाधावधित्वेन वा शुक्तिरजतादौ इदं रजतं नेदं रजतं इत्यादाविव किञ्चित्तत्त्वमभ्युपेयम् । अन्यथा तावुभौ नस्यातामिति भावेनाह ॥ न चेति ॥ इत्यस्यार्थस्येति ॥ तत्त्वाभावरूपार्थस्य प्रमितत्वे स एव तत्त्वमिति तत्त्वाभावोक्तिर्व्याहता । अप्रमितत्वे भावरूपतत्त्वमेव नास्तीति तत्त्वाभावोक्तिर्व्याहतेत्यर्थः । नन्वस्तु नाम तत्त्वं तच्चब्रह्मरूपं शून्यरूपं वा खरसभंगुरं विज्ञानरूपं वा एकमेव न द्विविधमित्यत आह ॥ यदिचेति ॥ भेदोपलम्भेति ॥ नाहं चैत्रः अपितु मैत्र इत्यादिरूपेण जीवानां अन्योन्यं जडाच्च जडानां अन्योन्यञ्च भेदोपलम्भविरोध इत्यर्थः ॥ तच्चान्यत्रेति ॥ दृश्यत्वाद्यनुमानादिरूपबाधकम् । 'वैधर्म्याच्च न स्वप्नादिवत्' (२-२-२९) इत्यादि सूत्रभाष्यादौ तत्त्वनिर्णयादिप्रकरणेषु, च निरस्तमित्यर्थः ॥

श्री— इतिशब्दाध्याहारेण कुतो योज्यमित्यत आह ॥अन्यथेति॥ ॥ द्विविधमिति ॥ प्रकारद्वयोपेतमित्यर्थः । 'तदधीनाश्च सर्वदा । सत्ता-प्रधानपुरुषशक्तीनाञ्च प्रतीतयः । प्रवृत्तयश्च ताः सर्वाः नित्यं नित्यात्मना यतः' इत्यनुव्याख्यानं मनसि निधाय स्वतन्त्रास्वतन्त्रतत्त्वे क्रमेण लक्षयति ॥ स्वरूपप्रमितीत्यादिना ॥ अत्र स्वरूपलक्षणसत्तायां स्वप्रमितिलक्षणसत्तायां स्वप्रवृत्तिलक्षणसत्तायाञ्च परानपेक्षमिति लक्षणत्रयं विवक्षितम् । अतो न वैयर्थ्यशङ्का । केचिन्मन्यन्ते स्वरूपमेव वस्तुनस्सत्वमिति । अपरेतु प्रमाणयोग्यत्वमिति । अन्ये पुनरर्थक्रियाकारित्वमिति । तदनुसारेण स्वरूपप्रमितिप्रवृत्तीनां सत्वव्यवहार इति ध्येयम् । ॥ परापेक्षमिति ॥ सत्तात्रैविध्य इति वर्तते ॥ तदुपपादनायेति ॥ तत्त्वं स्वतन्त्रास्वतन्त्रभेदेन द्विविधमित्युक्तस्य सर्वस्योपपादनायेत्यर्थः । इदं सर्वं प्रामाणिकैरङ्गीक्रियत इत्युक्त्या एवं ये नाङ्गीकुर्वन्ति तेषामप्रामाणिकत्वञ्च सूचितम् ॥ तदुपपादयति ॥ तथाहीत्यादिना ॥ तथा च इष्यत इत्यनेन परीक्षापि कृतेत्यवगन्तव्यम् । एवमुत्तरत्रापि द्रष्टव्यम् । येन स्वतन्त्रमस्वतन्त्रञ्चेति तत्त्वद्वैविध्यं नाङ्गीक्रियते स प्रष्टव्यः । किं तत्त्वस्यैवाभावात्तदनङ्गीकारः । भावेऽपि तस्यैकत्वेनानेकप्रकारत्वाभावात् द्वैविध्यं नाङ्गीक्रियते ।

अथ तत्त्वस्यैवानेकप्रकारत्वेऽप्यनेकप्रकारकस्य सर्वस्यापि स्वतन्त्रत्वेन वा अस्वतन्त्रत्वेन वा सर्वस्य एकविधत्वेन द्वैविध्यासम्भवाद्वा प्रकारान्तरेण द्वैविध्यसम्भवाद्वेति विकल्पचतुष्टयं मनसि निधायाद्यमनूद्य दूषयति ॥

---

वि—प्रामाणिकैरिति । अनेन प्रमाणसूचनद्वारा अर्थात् परीक्षापि कृतेति बोद्धव्यम् ।

रो—तच्चेति । सापेक्षत्वात्सावधेश्च तत्त्वेऽद्वैतप्रसङ्गतः ।
एकाभावान्न संदेहान्न रूपं वस्तुनो भिदा ॥
इत्यादिबाधकं तु विष्णुतत्त्वनिर्णयादौ निरस्तमित्यर्थः ।

स—स्वतन्त्रमस्वतन्त्रञ्चेति तत्त्वं द्विविधमिति प्रामाणिकैरिष्यत इत्यनेन सूचितामितरेषामप्रामाणिकतां लेशतः स्वयमाह ॥ यदीति ॥

॥ यदितत्त्वमेवेति ॥ प्रत्यक्षादीति ॥ घटपटपरात्मेश्वरधर्मादितत्त्वानां अस्तितायाः प्रत्यक्षचेष्टाद्यनुमानागमसिद्धत्वेन तदनङ्गीकारे तद्विरोधः स्यादित्यर्थः ॥ सेतीति ॥ सन् घट इत्यादि (घटादि) तत्त्वास्तितावगाहिनी प्रत्यक्षादिप्रतीतिरित्यर्थः। अस्तु वा अयं घट इत्यादिप्रतीतिभ्रान्तिः तथापि तदन्यथानुपपत्त्यैव तत्त्वसिद्धिरित्याह ॥ न च निरधिष्ठाना भ्रान्तिरिति ॥ सर्वस्या अपि प्रतीतेर्भ्रान्तित्वमभ्युपगच्छतापि भ्रान्तेः किञ्चिदधिष्ठानमङ्गीकार्यम्। नह्येत्थमेव क्वचिद्भ्रमः। किन्तु इदमित्थमिति। तथा च यदेवतदधिष्ठानं तदेकं तत्त्वमङ्गीकार्यमिति भावः। ननु मास्तु भ्रान्तेर्निरधिष्ठानत्वं भ्रमे यावत्प्रतीयते तावत्सर्वमपि असदेवेति स्वीकारादतो नेदं दूषणमित्यत आह ॥ नापि निरवधिकोबाधइति ॥ अवधिः आश्रयः भ्रमप्रतीतिनिषेधस्य तावत्पर्यन्तत्वात्। सर्वप्रतीतेर्भ्रान्तित्वं बाधैकगम्यम्। बाधश्च इदमित्थं न भवतीति वा अत्रेदं नास्तीति वा किञ्चिदवधिको द्रष्टव्यः। इत्थं न भवति इदं नास्तीत्येव बा(धकाभा)धाभावात्। बाधेन च यदवधित्वेन विषयीक्रियते तदेव तत्त्वमङ्गीकार्यम्। तस्यापि भ्रान्तिसिद्धत्वे तत्रापि बाधो वाच्यः। सोऽपि सावधिक इत्यनवस्थेत्यर्थः। अन्ये तु घटादिप्रतीतिभ्रमत्वस्य बाधैकगम्यतया बाधो वाच्यः। ततश्च तद्विषयस्यैव तत्त्वता स्यात्। न च बाधोऽपि भ्रम एव। तस्यापि बाधे तद्विषयस्य तत्त्वतापत्त्या तस्यापि भ्रम(त्वेन)त्वे अनवस्थाप्रसङ्गात्। इष्टापत्तिरितिचेत्तत्राह ॥ नापि निरवधिकोबाध इति ॥ निरवधिको निरवसानः। अप्रामाणिकत्वात्। प्रामाणिकत्वे च तदेवतत्त्वं स्यादिति भाव इत्याहुः ॥ तत्त्वमेव नास्तीत्यङ्गीकारे दूषणान्तरमाह ॥नास्त्येवेति ॥ तत्त्वं नास्तीत्यस्यार्थस्य प्रमितत्वे तत्त्वाभावरूपार्थस्यैव तत्त्वतापत्त्या तत्त्वं नास्तीत्यनेन व्याघातः। तत्त्वं नास्तीत्यस्यार्थस्य अप्रमितत्वे तत्त्वास्तित्वस्यैव प्राप्त्या तत्त्वं नास्तीत्यनेन व्याघात इत्यर्थः। भावेऽपि तस्यैकत्वेनानेकप्रकारत्वाभावात् द्वैविध्यं

टी—यदि वा सर्वमेव स्वतन्त्रं स्यात्तदा पारतन्त्र्यादिप्रतीतिविरोधः। नित्यसुखादिप्रसङ्गश्च। यदि वा परतन्त्रमेव तत्त्वं भवेत् तदाऽनवस्थितेरसम्भवाच्च न कस्यापि सत्तादिकं स्यात्। आगमविरोधश्च

---

नाङ्गीक्रियत इति द्वितीयमनूद्य दूषयति ॥ यदि चेति ॥ भेदोपलम्भेति॥ घटपटादिभेदावगाहि प्रत्यक्षोपलम्भविरोध इत्यर्थः। भेदोपलम्भस्य भ्रान्तित्वमाशङ्क्य निराकरोति ॥ तद्भ्रान्तितायाश्चेति ॥ तस्य भेदोपलम्भस्य भ्रान्तितायामित्यर्थः॥ वाच्यमिति ॥ नचतदस्तीति वाक्यशेषः। ननु कथं नास्ति भेदः। भेदः किं भेदिभ्यां भिन्नो वा अभिन्नो वा भिन्नाभिन्नो वा। नाद्यः सोऽपि भेदो भिन्न इत्यनवस्थानात्। न द्वितीयः। तत्तच्छब्दयोः पर्यायत्वापत्त्या घटो अभिन्न इति सहप्रयोगाभावापत्तेः। न तृतीयः विरोधात्। अतो बाधकाद्भेदः आपातरमणीयाविद्याविलसित एवेति तत्प्रतीतिर्भ्रमरूपैवेत्यत आह ॥ तच्चेति ॥ भेदस्य धर्मिस्वरूपत्वेऽपि तत्तच्छब्दयोः विशेषबलेनापर्यायत्वम्। अन्यथा अनयैव युक्त्या अभेदोऽपि अविद्याकल्पितःस्यात् इत्येवं निराकृतमित्यर्थः। तत्त्वस्यानेकप्रकारत्वेऽपि स्वतन्त्रत्वेनास्वतन्त्रत्वेन सर्वस्य एकविधत्वेन द्वैविध्याभावाद्वेति तृतीयमनूद्य दूषयति ॥ यदि चेत्यादिना ॥

रा—॥ पारतन्त्र्यादीति ॥ आरब्धकार्यप्रतिहत्या अनभिलषितानिष्टप्राप्त्या च पारतन्त्र्यानुभवात्। आदिपदेन हिताकरणाहितकरणकृत्स्नप्रसक्त्यादिग्रहः ॥ नित्यसुखादीति ॥ 'यदिनामनतस्यवशेसकलं कथमेवतुनित्यसुखं न भवेत्' इत्युक्तेरिति भावः। आदिपदेन दुःखनिवृत्तिः ॥ अनवस्थितेरिति ॥ पराधीनत्वाविशेषादस्यायं नियामकः तस्यान्यः तस्याप्यपर इति अपर्यवसितानन्तव्यक्तिपरम्परापत्त्या पूर्वपूर्वनियमनासिद्ध्या उत्तरोत्तरनियमनासिद्धेः मूलक्षयकरानवस्थादोषादित्यर्थः। अभ्युपेत्येदमुदितम्। वस्तुतस्तु परतन्त्रत्वाविशेषादन्येनान्यस्य नियमनमेवासम्भवीत्याह ॥ असम्भवादिति ॥ एकेनान्यस्य नियमना-

यद्यपि भावाभावतया वा चेतनाचेतनत्वेन वा नित्यानित्यतया वा अस्य द्वैविध्यं शक्यते वक्तुम्। तथाप्यस्य वैयर्थ्यादयमेव विभागो न्याय्यः।

---

सम्भवान्न कस्यापि सत्ताप्रतीतिः प्रवृत्तिश्चस्यादित्यर्थः ॥ तदाह सूत्रकारः ॥ 'अनवस्थितेरसम्भवाच्च नेतरः' (१-२-१७) इति ॥आगमेति॥ 'पृथिवीमन्तरो यमयति आत्मानमन्तरो यमयति' इत्याद्यागमविरोध इत्यर्थः। 'सर्वमसौतुहरिर्यमयेदिति वैदिकमस्तिवचः' इत्युक्तेरिति भावः। एवञ्च तत्त्वपदेन द्विविधपदेन स्वतन्त्रास्वतन्त्रपदाभ्यां व्यावर्तितं पक्षचतुष्टयं इष्यत इति पदसूचितयुक्तिभिः निरस्य इदानीं एवंविधविभागमाक्षिप्य समाधत्ते ॥ यद्यपीत्यादिना ॥ स्वतन्त्रतत्त्वस्येत्यतः प्राक्तनेन ग्रन्थेन ॥ अस्येति ॥ तत्त्वस्येत्यर्थः।

श्री—॥ पारतन्त्र्येति ॥ भृत्यादेः स्वाम्यधीनतायाः पुत्रादेः पित्राद्यधीनतायाः स्वप्रत्यक्षसिद्धत्वेन तद्विरोध इत्यर्थः। 'यदि नाम न तस्य वशे सकलं कथमेवतु नित्यसुखं न भवेत्' इति भगवत्पादीयं वचनं मनसि निधाय दूषणान्तरमाह ॥ नित्यसुखादीति ॥ आदिपदेन 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' ( २-१-२२ ) इति सूत्रोक्तहिताक्रियादिप्रसक्तदोषोऽपि ग्राह्यः। तथा च सर्वस्यापि स्वतन्त्रत्वे नित्यसुखं स्यात्। स्वतन्त्रकर्तुरपि हिताक्रियादिदोषप्रसङ्गश्चेत्यर्थः। सर्वस्यापि पारतन्त्र्ये पराधीनत्वाविशेषादस्यायं नियामकः तस्यान्यः तस्याप्यपर इत्यपर्यवसितानन्तव्यक्तिपरंपरया उत्तरोत्तरनियमनासिध्या पूर्वपूर्वनियमनासिद्धमूलक्षयकरानवस्थादोषादित्यर्थः। अभ्युपेत्यैतदुक्तम्। वस्तुतस्तु पारतन्त्र्याविशेषादन्येनान्यनियमनमेवासम्भवीत्याह ॥ असंभवादिति ॥ एकेनान्यस्य नियमनासम्भवान्नकस्यापि सत्ताप्रतीतिः प्रवृत्तिश्चस्यादिति राघवेन्द्रीये ॥ अनवस्थितेरसम्भवाच्चेति ॥ सर्वस्यापि पारतन्त्र्ये परस्यापि पारतन्त्र्यम्। एवमन्यस्यापीत्यनवस्थिते-

टी—परतन्त्रप्रमेयं स्वतन्त्रप्रमेयायत्ततया विदितं हि (निश्श्रेय) निःश्रेयसाय भवति। तथा च प्रकरणान्ते वक्ष्यति। अन्यथा गङ्गा-वालुकपरिगणनवदिदं तत्त्वसङ्ख्यानमपार्थकं स्यात्। अतः स्वतन्त्रा-

---

रित्यर्थः। अभ्युपगम्यचेदमुदितम्। नियामकजीवस्यापि प्रेर्येण जीवत्व-साम्यात्प्रेरणासम्भवाच्चेत्यर्थः। ननु भवद्भिरप्युत्तमजीवानामधमजीव नियामकता अङ्गीकृतैव। अतः तत्रापि सममिदं दूषणमितिचेन्न। यथा सति राज्ञि मण्डलेशे प्रजानां तच्छक्त्या नियम्यनियामकभावः संभवति। नत्वराजके लोके। तथा अस्मत्पक्षे जीवानां स्वतन्त्रेश्वरशक्त्या जीवान्त-रनियामकत्वमुच्यते न परपक्षे। स्वतन्त्रवस्त्वनङ्गीकारादिति भावः। यथोक्तं सूत्रकृता। 'अनवस्थितेरसम्भवाच्च नेतरः' (१-२-१७) इति। व्याख्यातश्चैतद्भाष्ये। 'जीवस्य जीवान्तरनियामकत्वे अनवस्थितेः साम्यादसम्भवाच्च न जीवः। नियमे प्रमाणाभावादनीश्वरापेक्षत्वाच्चेति'। सत्तादिकं स्यादित्यत्रादिपदेन प्रमितिप्रवृत्त्योर्ग्रहणम् ॥ आगमविरोध-श्चेति ॥ सर्वस्याधिपतिः सर्वस्येशानः सर्वस्य वशीत्यादि स्वतन्त्रेश्वर-प्रतिपादकागमविरोधः। प्रकारान्तरेण द्वैविध्यसम्भवाद्वेति चतुर्थ-विकल्पमनूद्य दूषयति ॥ यद्यपीत्यादिना ॥ अस्येति ॥ भावाभावत्वा-दिना तत्त्वद्वैविध्यकथनस्येत्यर्थः ॥वैयर्थ्यादिति॥ भावाभावाद्युक्तरीत्या तत्त्वद्वैविध्यज्ञानस्य मोक्षासाधनत्वादित्यर्थः।

रा—न्याय्यतां व्यनक्ति ॥ परतन्त्रेत्यादिना ॥ कुत एतदित्यत आह ॥तथा चेति॥ उक्तप्रकारेण वक्ष्यति च 'सृष्टिस्थितिश्च' इत्यादिना सर्वस्येशायत्तत्वमित्यर्थः। तादृशज्ञानं निःश्रेयसहेतुरिति तत्रानुक्तावपि तदुक्तिवैयर्थ्यान्यथानुपपत्त्या तल्लभ्यत इति भावः। परतन्त्रेत्यादि-श्लोकार्थे स्वयं युक्तिश्चाह ॥ अन्यथेति ॥ एवं विभागाकरणेति वा। पराधीनतया जगतो ज्ञातव्यत्वाभाव इति वा। तथा ज्ञानस्य निःश्रेयस-हेतुत्वाभाव इति वार्थः ॥ अत इति ॥ स्वातन्त्र्यादिभेदेन विभागस्य

स्वतन्त्रभेदात् द्विविधं तत्त्वमिति स्वतन्त्रतत्त्वस्य प्राधान्यात्तदेवादावुद्दिष्टम् । उद्देशेनैव लक्षणञ्च लब्धम् । अतएवादौ तन्निर्दिशति ॥

॥ स्वतन्त्रो भगवान्विष्णुः ॥

---

उक्तदिशान्याय्यत्वादित्यर्थः । इति शब्दः स्वतन्त्रमस्वतन्त्रञ्चेत्यनेनोक्तविभागसमर्थनपरिसमाप्तौ वर्तते । स्वतन्त्रतत्त्वस्य प्रथमोद्देशे निमित्तमाह ॥ स्वतन्त्रतत्त्वस्येति ॥ उद्दिष्टमिति ॥ प्रथमवाक्ये । ननु उद्देशस्य लक्षणोक्त्यर्थत्वादुद्देशानन्तरं लक्षणानुक्तिरनुचितेत्यत आह ॥ उद्देशेनैवेति ॥ लक्षणञ्चेति ॥ स्वसत्तादौ परानपेक्षत्वरूपमित्यर्थः ॥ अत एवेति ॥ प्राधान्यादेवेत्यर्थः ।

श्री—एवंतर्हि स्वतन्त्रास्वतन्त्रभेदेन तत्त्वद्वैविध्यकथनमपि व्यर्थं प्रयोजनाभावादित्यत आह ॥ परतन्त्रप्रमेयमिति ॥ आयत्ततया अधीनतया । 'अधीनो निघ्नआयत्त' इत्यभिधानात् । सृष्टिस्थितिनियमनादाविति शेषः ॥ वक्ष्यतीति ॥ 'सृष्टिःस्थितिःसंहृतिश्चे'त्यादिना । 'विष्णुनास्य समस्तस्य समासव्यासयोगतः' इति प्रकरणान्ते परतन्त्रप्रमेयस्य सृष्ट्यादिविषये स्वतन्त्रभूतविष्णवधीनत्वस्योक्तत्वादित्यर्थः । यद्यप्यत्र परतन्त्रप्रमेयस्य स्वतन्त्रप्रमेयभूतविष्णवधीनत्वमेवोक्तम् । नतु तज्ज्ञानस्य मोक्षसाधनत्वम् । तथापि 'य एतत्परतन्त्रन्तु सर्वमेव हरेः सदा । वशमित्येव जानाति संसारान्मुच्यतेहि सः' इति तत्त्वविवेकान्ते उक्तप्रकारेण तज्ज्ञानस्य मोक्षहेतुत्वमप्यत्राभिप्रेतमिति द्रष्टव्यम् ॥ अन्यथेति ॥ तज्ज्ञानस्य निःश्रेयसासाधनत्व इत्यर्थः । तत्त्वसङ्ख्यानं तत्त्वपरिगणनम् । ननु स्वतन्त्रतत्त्वस्यादावुद्देशे किं निमित्तमित्यत आह । स्वतन्त्रतत्त्वस्येति । ननु उत्तरत्र स्वतन्त्रतत्त्वं निर्दिश्यते । तत्कथम् । लोके लक्षणमुक्त्वा निर्देशोदृष्टः नान्यथा । अतो लक्षणाकथनान्न्यूनता इत्यत आह ॥ उद्देशेनैवेति ॥ यत् स्वसत्तादौ स्वस्यैव तन्त्रं अधीनं नतु परापेक्षं तत्स्वतन्त्रमिति संज्ञानिर्वचनेनैव लक्षणं लब्धमिति न न्यूनतेत्यर्थः । इदमुप-

टी—अत्र भगवानिति विष्णोः स्वातन्त्र्योपपादकम् । अन्यद्-स्वतन्त्रमिति शेषः । अथवा द्वे तत्त्वे इत्युक्ते स्वतन्त्रमिव परतन्त्रमेका-व्यक्तिरेव प्रसज्येत । तथा च प्रमाणविरोधो वक्ष्यमाणविभाग-

---

लक्षणम् । यत् स्वसत्तादौ स्वतन्त्रं स्वाधीनं न भवति परापेक्षमिति यावत् । तत् अस्वतन्त्रमिति अस्वतन्त्रतत्वलक्षणमपि द्रष्टव्यम् ।। (अत) तत एवेति ।। प्राधान्यादेवेत्यर्थः ।

रा—ननु स्वतन्त्रो विष्णुरित्येतावतैव पूर्तौ भगवानितिपदं व्यर्थमित्यत आह ।। अत्र भगवानितीति ।। स्वातन्त्र्योपपादकमिति ।। तेन समग्रैश्वर्यादिषड्गुणवत्वस्य लाभादिति भावः । मूले अस्वतन्त्र-तत्त्वप्रदर्शकपदाभावादाह ।। अन्यदस्वतन्त्रमिति शेष इति।। 'सङ्ख्यायाः विधार्थे धा' इत्युक्तस्य द्विविधमिति धा प्रत्ययस्यार्थवत्वं वक्तुमाह ।।अथवेति।। तत्रावान्तरभेदसूचक धा प्रत्ययाभावादिति भावः ।। तथा-चेति ।। एकव्यक्तिप्रसक्तितश्च प्रत्यक्षादिप्रमाणविरोध इत्यर्थः ।। अत इति ।। अवान्तरानेकभेदसूचनायेत्यर्थः ।। इत्युक्तमिति।। अवान्तरानेक-भेदोपेते द्वे तत्वे इत्यर्थलाभाय धा प्रत्ययान्तपदं प्रयुक्तमित्यर्थः । अस्त्वेवं तथापि किं प्रकृत इत्यत आह ।।ततश्चेति।। धाप्रत्ययान्तप्रयोगतश्चेत्यर्थः । परतन्त्रमिवेति योज्यम् ।

श्री—ननु उत्तरत्रास्वतन्त्रविभाग एवोच्यते नतु इदं अस्वतन्त्र-तत्त्वमिति निर्दिश्यते । अत आह ।। अन्यदिति ।। स्वतन्त्रो भगवान्विष्णु रितिवचनस्याभिप्रायान्तरमाह ।। अथवेति ।। इत्युक्त इति ।। द्विविध-मित्यनुक्त्वेति शेषः ।। प्रमाणविरोध इति ।। ब्रह्मादिचेतनानां घटाद्य-

---

स—परतन्त्रेत्यादिना ।। परः तन्त्रं–प्रधानं यस्य तत् तथा । "तन्त्रं प्रधाने सिद्धान्ते कुटुम्ब" इति विश्वः । "तन्त्रं प्रधाने सिद्धान्त" इत्यमरः । तन्त्रं कुटुम्बकृत्येस्यादित्यारभ्य "प्रधाने तन्तुवायेचेति" तट्टिप्पणीसंगृहीताभिधानञ्च ।

विरोधश्च । अतो द्विविधमित्युक्तम् । ततश्च स्वतन्त्रमपि अनेकविधं स्यादित्यत इदमुक्तम् ।

---

चेतनानाञ्च बह्वीनां परतन्त्रव्यक्तीनां प्रमाणप्रमितत्वेन तद्विरोध इत्यर्थः । ॥ वक्ष्यमाणेति ॥ 'भावाभावौ द्विधेतरत्' इति परतन्त्रविभागस्योच्यमानत्वेन परतन्त्रव्यक्तेरेकत्वे तद्विरोधःस्यादित्यर्थः ॥ द्विविधमित्युक्तमिति ॥ स्वतन्त्रास्वतन्त्ररूपप्रकारद्वयोपेतमित्यर्थः ॥ ततश्चेति ॥ स्वतन्त्रास्वतन्त्रत्वयोः प्रकारत्वोक्त्या प्रकारवत्वस्य स्वाश्रयव्यक्तिभेदसापेक्षत्वात् परतन्त्रतत्त्ववत् स्वतन्त्रतत्त्वमपि अनेकंस्यादित्यर्थः ॥ इदमुक्तमिति ॥ स्वतन्त्रो भगवान्विष्णुरित्येकवचनेन तस्यैकत्वोक्तेरुक्तशङ्कापरिहृतेति ज्ञातव्यम् ।

---

वि—ननु प्रथमं इतिशब्दाध्याहारं विनैव तत्त्वं स्वतन्त्रमस्वतन्त्रमिति अक्लिष्टान्वयेनैव द्वैविध्यलाभे द्विविधमित्यनर्थकम् । अन्यदस्वतन्त्रमिति शेषदानं चाधिकमित्यस्वरसात्कल्पान्तरमाह—अथवेति ।

वै—अतेति ॥ तत्त्वविवेके निर्दोषाखिलसद्गुणत्वस्य स्वातन्त्र्योपपादकस्य सत्वात् 'भगवानि'त्येतत्पूजार्थमिति व्याख्यातम् । अत्र पुनः स्वातन्त्र्योपपादकस्यान्यस्याभावात् तदुपपादकमेव तदिति भावः ।

इदमुक्तमिति ॥ स्वतन्त्रो भगवान् विष्णुरेक एवेत्युक्तमित्यर्थः । एतेन अस्वतन्त्रमिव स्वतन्त्रमपि अवान्तरभेदवदिति द्विविधमित्यनेनोक्त्वा 'स्वतन्त्रो भगवान् विष्णु' रित्यनेन स्वतन्त्रव्यक्तेरेकत्वोक्तौ स्ववचनव्याहतिरित्यपास्तम् । भावानवबोधात् । नहि प्रकारद्वैविध्योक्तिः प्रकारिणोप्यवान्तरभेदस्यवाचिका, येन 'द्विविध'मित्युक्त्या स्वतन्त्रस्याप्यवान्तरभेदो वचनवृत्या उक्तः स्यात् । नापि प्रकारद्वैविध्योक्तिः प्रकारप्रकारिणोः अवान्तरभेदस्य व्याप्यम् । येन द्विविधमित्युक्त्या स्वतन्त्रस्याप्यवान्तरभेदोऽप्यर्थादुक्तस्स्यात् । किन्तु आश्रययोः व्यक्त्यैक्यप्रापकप्रकारिद्वित्वमनुक्त्वा 'द्विविधम्' इति प्रकारद्वित्वोक्तिः प्रकार्यवान्तरभेदस्य सूचिकैव, साचापवादाभावे प्रकारिणोऽशेषस्यावान्तरभेदं सूचयति—यथा 'भावाभावौ द्विधेतरत्' इत्यादौ । सति तु अपवादे

टी—अथवा स्वतन्त्रास्वतन्त्रभेदेन तत्वद्वैविध्यमङ्गीकुर्वाणा अपि साङ्ख्यादयः प्रधानादिकं स्वतन्त्रतत्त्वमातिष्ठन्ते। तन्निरासाय इदमुदितमिति ॥ द्विविधमित्युक्त्या परतन्त्रतत्वमवान्तरभेदवदिति सूचितम्। तत्कथमिति तत्राह ॥

॥ भावाभावौ द्विधेतरत् ॥ १ ॥

इतरत् स्वतन्त्रात्। अस्वतन्त्रतत्वं द्विधा। कथम्? भावो अभावश्चेति। अभावप्रतीतिः भावप्रतीत्यधीना नियमेनेति प्राधान्यात्प्रथमं भावस्योद्देशः।

---

रा—विष्णुरित्युक्तेरर्थवत्वाय योजनान्तरमाह ॥ अथवेति ॥ ॥ साङ्ख्यादय इति ॥ साङ्ख्यशैवहैरण्यगर्भप्रभृतयः। प्रधानादिकं प्रधानशिवहिरण्यगर्भस्कन्दसूर्यशक्त्यादिकमित्यर्थः। आतिष्ठन्ते अभ्युपगच्छन्ति। उत्तरवाक्यमवतारयति ॥ इत्युक्त्येति ॥ विधार्थे विहित-

---

अपवादविषयातिरिक्ते अवान्तरभेदसूचनेनाप्युपपन्ना, नापवादविषये अवान्तरभेदं सूचयति। यथा 'दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैवचेतनम्' इत्यादौ। तथा च कुतः स्वोक्तिविरोध इत्यादि।

स—स्वातन्त्र्यं विष्णोरेव कुत इत्यत उक्तं भगवानिति। भगवांश्च स उच्यते यः "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणे"त्युदीरितैश्वर्यादिषड्गुणः। ततश्च विष्णुः—स्वतन्त्रः—भगवत्वात्। व्यतिरेकेण यज्ञदत्तवदिति प्रकारेण भगवत्वं स्वातन्त्र्यस्योपपादकं साधकं भवतीति भावः। प्राधान्यात् स्वतन्त्रतत्त्वस्य विष्णोरादौ शृङ्गग्राहिकया निर्देशेनैवार्थात् सूचितं तदितरस्यास्वातन्त्र्यं कण्ठत आह ॥अन्यदिति॥ अत्र भगवानिति विष्णोरिति टीका विष्णुशब्दस्य रूढत्वं भगवच्छब्दस्य यौगिकत्वमभ्युपेत्य प्रवृत्ता। यदातु वैपरीत्यं विवक्षितं तदा विष्णुरिति भगवतः स्वातन्त्र्योपपादकमिति टीकाविन्यासो बोध्यः। ततश्च "भगवान्भगहा नन्दी" त्युक्तदिशा भगवान् हरिः—स्वतन्त्रः—विष्णुत्वात्—व्यतिरेकेण चैत्रवदिति प्रयोगो बोध्यः। विष्णुत्वात्=सर्वव्यापित्वात्।

धाप्रत्ययान्तपदोक्त्येत्यर्थः। तत्कथमिति प्रश्नः। तत्र एवं प्रश्ने सति परिहारमाहेत्यर्थः। इति पदाध्याहारेणाह ॥ भावोऽभावश्चेतीति ॥ भावस्य प्रथमोद्देशे निमित्तमाह ॥ अभावप्रतीतिरिति ॥ नियमेनेति ॥ प्रतियोगिज्ञानं विना अभावप्रतीतेः कदाप्यनुदयादिति भावः।

श्री—स्वतन्त्रो भगवान् विष्णुः इत्यस्य पुनरभिप्रायान्तरमाह ॥ अथवेति ॥ साङ्ख्यादय इति आदिपदेन पाशुपतशैवशाक्तादयो ग्राह्याः। प्रधानादिकमित्यादिपदेन शिवशक्त्यादिकं ग्राह्यम् ॥ द्विविध-मित्युक्त्येति ॥ द्विविधमित्यनेन स्वतन्त्रास्वतन्त्रतत्त्वयोर्विभाजकोपाधित्वरूपप्रकारत्वस्योक्तत्वात् स्वतन्त्रपरतन्त्रयोरवान्तरभेदोऽस्तीति सूचितम्। प्रकारत्वस्य स्वाश्रयव्यक्तिभेदंविना अनुपपत्तेः। यद्वा परीक्षकैः तत्रैवहि प्रकारपुरस्कारेण विभागः कथ्यते यत्र प्रकारिणां बहुत्वेन विभागः कर्तुं न शक्यते। यथा द्विविधं केवलं चतुर्विध-मित्यादौ। एवञ्च प्रकृते प्रकारपुरस्कारेण द्वैविध्यकथने प्रकारि-बहुत्वं प्राप्तमेवेति तेन सूचितमिति द्रष्टव्यम् ॥ सूचितमिति॥ सूचना-भावे श्रोतुरवान्तरभेदवत्ताज्ञानाभावेन तत्कथं इति आकांक्षाया अनु-दयात् तं प्रति अवान्तरभेदकथनमसङ्गतं स्यादिति भावः। एव-मुत्तरत्रापि ज्ञातव्यम्। भावस्य प्रथममुद्देशे प्राधान्यं निमित्तम्। प्राधान्येऽपि किं निमित्तमित्याशङ्कायामाह ॥ अभावप्रतीतिरिति ॥

---

वे—तन्निरासायेति ॥ "न च कर्मविमामलकालगुणप्रभृतीशमचित्तनु तद्धियतः" इत्युक्तरीत्या प्रधानादिस्वातन्त्र्यनिरासाय "स्वतन्त्रो भगवान् विष्णुरेक एवेत्युक्तमित्यर्थः"।

नियमेनेति ॥ न च प्रागभावध्वंसप्रतीतेः प्रतियोगिरूपभावप्रतीत्यधीनत्वेऽपि अत्यन्तासत्प्रतियोगिकात्यन्ताभावस्य प्रतीतिः कथं भावप्रतीत्यधीनेतिवाच्यम्। तत्राप्यप्रसक्तस्य प्रतिषेधायोगेन प्रसक्तेश्च भ्रान्तिरूपतया अधिष्ठानज्ञानरूपभावप्रतीत्यधीनत्वादिति भावः।

स—अभावप्रतीतिरिति॥ अभावत्वेनाभावप्रतीतिरत्रविवक्षिता। तेन प्रमेयत्वेन अभावप्रतीतेः प्रतियोगिभावप्रतीत्यनधीनत्वेपि न दोषः।

टी—प्रथमप्रतीतौ अस्तीत्युपलभ्यते यः स भावः। यश्च प्रथमोपलब्धौ नास्तीति प्रतीयते सोऽभावः। कुत एतत्। स्वरूपेण हि भावाभावौ विधिनिषेधात्मानौ। रूपान्तरेण तु निषेधविधिरूपौ। तत्रापातजायां संविदि स्वरूपमेव भासते। द्वितीयादिप्रतीतौ रूपान्तरम्। कार्यगम्यत्वात्सामग्रीभेदस्य।

---

प्रतियोगिज्ञानाधीनत्वात् अभावज्ञानस्येति भावः। यथाहुः। सद्भ्यां अधिकरणप्रतियोगिभ्यां अभावो निरूप्यत इति।

रा—'प्रथमप्रतिपत्तिषु। निषेधविधिरूपत्वं भावाभावत्वमत्रहि' इति युक्तिपादीयानुव्याख्यानानुरोधेनाह ॥ प्रथमप्रतीताविति ॥ विषयिविषययोराधाराधेयभावो गौण इत्यभिप्रेत्य सप्तमीप्रयोगः ।कुतएतदिति। एतद्भावाभावव्यवस्थाकल्पनं कुतः कुतो मानादित्यर्थः। घटादेर्भावस्यापि पटादिर्नेति निषेधधीविषयत्वादिति भावः। भावाभावधीरेव प्रमाणं तथा प्रतीतौ च तत्तत्स्वरूपमेव नियामकमिति भावेनाह ॥ ॥ स्वरूपेणेति ॥ विधीति ॥ अपरप्रतिक्षेपपरप्रतिक्षेपरूपावित्यर्थः। नन्वस्तुनाम भावाभावयोः स्वरूपेण विधिनिषेधरूपताच। तथापि किं प्रकृत इत्यत आह ॥ तत्रेति ॥ नन्वापातजायां संविदिस्वरूपमेवावभासते रूपान्तरन्तु द्वितीयादिप्रतीतौ भासत इति कुतः। रूपद्वयप्रतीतिसामग्रीभेदे मानाभावादित्यत आह ॥ कार्यगम्यत्वादिति॥ प्रतीतिरूपकार्यभेद एव तत्सामग्रीभेदे मानमिति भावः। पूर्वापरभावापन्नोक्तरूपद्विविधप्रतीतिरूपकार्यगम्यत्वाद्भावाभावप्रतीतिद्वयसामग्रीभावस्यादौ

---

सा च प्रतीतिः साक्षात्काररूपा। तेन अभावपदाज्जायमानेऽभावबोधे तदपेक्षाभावेऽपि न नियमस्योक्तस्यातिक्रमः। भावस्यापि अभावविलक्षणत्वेन प्रतीतिः अभावरूपप्रतियोगिसापेक्षेति अभावस्यापि प्राधान्यात् स एवादौ किन्नोद्दिश्यत इत्यत आह ॥ नियमेनेति ॥

वि—प्रथमेत्यादि॥ सत्तावद्विशेष्यक-प्राथमिक-प्रतीतिविषयत्वं भावत्वम्। सत्ताभाववद्विशेष्यक-प्राथमिक-प्रतीतिविषयत्वं अभावत्व-

विधिरूपप्रतीतिंजनयित्वा पश्चात् निषेधरूपप्रतीतिं जनयति। अभाव-प्रतीतिसामग्रीतु भावप्रतीतिवैपरीत्येनाभावप्रतीतिं जनयतीत्येवं भावाभावप्रतीतिसामग्र्योर्भेदस्येति वा। भावस्यादौ विधिप्रतीतिसामग्री पश्चान्निषेधप्रतीतिसामग्री इत्यादिरूपेण सामग्रीभेदस्येतिवार्थः।

श्री—भावाभावयोर्लक्षणं स्वयं दर्शयति ॥ प्रथमप्रतीतावि-त्यादिना ॥ भावलक्षणे अभावे अतिव्याप्तिपरिहाराय प्रथमप्रतीता-

---

मित्यर्थः। न च सत्तादौ सत्तायाः अभावेन भावाभावविभाजकोपाध्योरव्याप्तिरिति वाच्यम्। सत्तादावपि एकार्थसामाधिकरण्येन सत्तायाः विद्यमानत्वात्, अभावेतु सत्ताभावेऽपि अभेदेन संबन्धेन सत्ताभाव-सत्वात्।

स—स्वरूपेणहीति ॥ प्रथमत्वं प्रतीतौ विशेषणम्। तत्र यदा यदा स्वयं ज्ञायते तदा तदा स्वविषयकं ज्ञानद्वयमस्ति। आपातजं विमर्शजञ्चेति। आपातजप्रतीतिरेवेहोक्तप्रथमत्वविशेषितप्रतीतिशब्द-वाच्या। न च के इमे इति तत्पक्षविकल्पदोषः। अस्तीत्याकारिका प्रतीति-रस्तीतिप्रतीतिरिति वदामः। न चात्रास्तीत्याकारकत्वं भावत्वघटितम्। येनात्माश्रयःस्यात्। किन्त्वखण्डस्यैव ज्ञानधर्मस्य तस्योररीकरणात्। न चात्र प्रमाणाभावः। भ्रमप्रमासाधारण्येन अस्ति रजतमिति ज्ञाना-नन्तरं ममात्र रजतमस्तीति ज्ञानं जातमित्यबाधितानुभवस्य तत्र मान-त्वात्। एवञ्चाविमर्शजास्तीत्याकारकज्ञानविषयत्वं भावस्य लक्षणम्। नास्तीत्याकारकापातजज्ञानविषयत्वमभावस्य लक्षणमित्युक्तं भवति।

का—प्रथमेति ॥ विधित्वेन प्रथमप्रतीतिविषयत्वं भावत्वम्। निषेधत्वेन प्रथमप्रतीतिविषयत्वमभावत्वमित्यर्थः। विधित्वनिषेधत्वे-चाखण्डोपाधी। एतदभिप्रायेणैव भावत्वादिकमखण्डोपाधिरिति विज-यीन्द्रतीर्थश्रीमच्चरणैरुक्तम्। द्वितीयादिप्रतीतौ अभावस्यापि विधित्वेन-भावात् प्रथमेति। प्रथमत्वञ्च प्रतीत्यनुत्तरत्वम्। तेन द्वितीयादिप्रतीतेः तृतीयादिप्रतीतितः प्राथम्येऽपि न क्षतिः। नचाभावप्रतीतेः प्रतियोग्यादि-प्रतीत्युत्तरत्वनियमात्प्राथम्यायोगः। स्वविषयविषयकप्रतीत्यनुत्तरत्व-स्यात्रविवक्षितत्वात्। न चान्योन्याभावे अव्याप्तिः। तत्प्रतीतेस्तदभिन्न-धर्मिप्रतीत्युत्तरत्वनियमादिति वाच्यम्। भावस्वरूपाभावस्यालक्ष्य-

टी—तथा च प्रतीतिः। अस्त्यत्र घटः स न शुक्ल इति। एवं नास्त्यत्र घटः अस्ति घटाभाव इति। ननु स्वतन्त्रतत्वं भावोऽभावोऽन्यद्वा। नाद्यद्वितीयौ। भावाभावयोः परतन्त्रप्रभेदत्वात्। न तृतीयः। व्याघातात्। नैवम्। भावलक्षणाक्रान्तत्वात्। परतन्त्रं भावाभावतया द्विधैव न पुनरेकविधं नापि त्रिविधमित्येवं परो विभागः न पुनः परतन्त्रमेव भावाभावात्मकमिति।

---

विति विशेषणम्। अभावलक्षणे भावे अतिव्याप्तिपरिहाराय प्रथमोपलब्धौ इत्युक्तम्। एवं प्रथमेतिविशेषणात् उभयत्र परस्परातिव्याप्तिपरिहारं प्रश्नपूर्वकमुपपादयितुमाह ॥ कुतएतदित्यादिना ॥ लक्षणद्वयेऽपि प्रथमेति विशेषणं कस्मात् दत्तमित्यर्थः। उत्तरमाह ॥ स्वरूपेणहीत्यादिना ॥ रूपान्तरेण धर्मान्तरेण ॥ निषेधेति ॥ भावोऽपि निषेधरूपः अभावोऽपि विधिरूप इत्यर्थः ॥आपातजायामिति॥ निर्विकल्पकरूपायामित्यर्थः। प्राथमिकज्ञान इति यावत्। ननु सामग्रीवैचित्र्यकल्पने किं मानं इत्यत आह ॥ कार्येति ॥

रा—कार्यमेवासिद्धमित्यत आह ॥ तथाचेति ॥ उक्तरूपेणास्ति च प्रतीतिरित्यर्थः। अस्वतन्त्रं भावाभावभेदात् द्विविधमित्यङ्गीकारे स्वतन्त्रं भावो न स्यादित्याशयेनाशङ्कते ॥ नन्विति ॥ अन्यद्वा भावाभावाभ्यां अन्यद्वेत्यर्थः। परतन्त्रप्रभेदत्वात्। परतन्त्रविशेषत्वादित्यर्थः। ॥ व्याघातादिति ॥ भावोनेत्युक्ते अभाव इति प्राप्तं पुनरभावो नेत्युक्ते व्याघातः। तथा अभावो नेत्युक्ते भाव इति प्राप्तं पुनः भावो नेत्युक्ते व्याघातः इत्यर्थः ॥ भावलक्षणेति ॥ अस्ति ब्रह्म। नारायणो वा इदमग्र असीत् ब्रह्म वा इदमग्र आसीत् इत्यादिरूपेण प्रथमप्रतीतौ विधितया प्रतीयमानत्वरूपभावलक्षणोपेतत्वाद्भावत्वमेवेत्यर्थः। तर्हि भावाभावौ

---

त्वात्। अभावस्वरूपे च धर्मिप्रतीतिमादायैव लक्षणसङ्गतेः। अत एव यस्तु नास्तीति प्रतीयते सोऽभाव इत्युक्तम्। अन्यथा यस्तुनेति प्रतीयत इत्येवावक्ष्यत्।

द्विधेतरदित्युक्तिविरोध इत्यत आह ।। परतन्त्रमिति ।। इत्येवंपरइति ।। इत्येवमेतादृशो न्यूनाधिकसंख्याव्यवच्छेदः परः उद्देश्यः यस्य स तथा तत्प्रयोजक इति यावत् ।। विभाग इति ।। भावाभावौ द्विधेतरदित्यनेनोक्त विभाग इत्यर्थः। इति शब्दानन्तरं एवं पर इत्यस्यानुषङ्गः। इत्येवमेतादृशोऽयं इतरव्यवच्छेदस्तत्परो न भवतीत्यर्थः।

श्री—कार्यवैचित्र्यमेव दर्शयति ।।तथा च प्रतीतिरिति।। स न शुक्ल इति ।। इदं ज्ञानं न प्राथमिकं प्रतियोगिज्ञानादिविलम्बादिति भावः ।। अस्ति घटाभाव इति ।। घटाभाववद्भूतलमित्यर्थः। अभावविशेषणकं सत्ताविशेष्यकं ज्ञानमेतत्। इदमपि ज्ञानं न प्रथमभावि। विशेषणस्याभावस्य पूर्वं अज्ञानात् इति भावः। नास्ति अत्र घट इति ज्ञानेतु घटाभावस्य विशेष्यत्वात् तज्ज्ञानस्य अकारणत्वात् न विलम्ब

---

वे—कार्यमेव क्रमेणोदाहरति ।। एवमिति ।। ननु—भावलक्षणे घटाभावोऽस्तीति वाक्यात् प्रथममेवास्तीत्युपलभ्यमानेऽभावेऽतिव्याप्तिरिति वाच्यम्। तत्रापि घटाभाव इत्यवान्तरवाक्यार्थभूतप्रतिषेधाकारप्रतीत्युत्तरकालमेव तदस्तित्वप्रतीतेः। अत एव घटो नास्तीति वाक्यात् प्रथममेव घटस्य नास्तित्वाकारेण प्रतीतेरभावलक्षणस्यातिव्याप्तिरिति परास्तम्। ननु—भावलक्षणे तथाप्यतिव्याप्तिः॥ तथाहि—भेदो हि धर्मिस्वरूपमेव, स च धर्मिग्रहेण न गृह्यत एव। उक्तं हि—"स्वरूपं वस्तुनो भेदो यत्र तस्य ग्रहे ग्रहः" इति। न च प्रथमोपलब्धौ सप्रतियोगिकप्रतिषेधाकारेण प्रतीयमानत्वं विवक्षितम्। तथा च स्वरूपाकारेण प्रतीतावपि नातिव्याप्तिरिति वाच्यम्। प्रथममेव सामान्यतः सर्वविलक्षणत्वेन वस्तुप्रतीत्यङ्गीकारात्। उक्तं हि—"प्रायः सर्वतोविलक्षणं पदार्थस्वरूपं दृश्यत" इति। तथा च कथं नातिव्याप्तिरिति। मैवं—विशेषतःप्रतिषेधाकारेण प्रथमं प्रतीयमानत्वस्य अभावलक्षणत्वेन विवक्षितत्वात्। स्वरूपेण भेदप्रतीतावपि प्रथमं विशेषाकारेण प्रतीत्यभावात्। अत एव अनन्तरप्रतीतिः "न शुक्ल" इति विशेषाकारेणैवोदाहृता। उक्तं हि—'को विरोधः स्वरूपेण गृहीतो भेद एवतु।

अस्य अमुष्मादिति पुनः विशेषेणैव गृह्यते" ॥ इति ॥

टी—यथा भावेषु स्वतन्त्रतत्त्वं प्रविशति तथा विभागः क्रियतामिति चेत् नैवं शङ्क्यम् । तद्धि प्रधानतया सर्वविविक्तमेव वेदितव्यम् । अन्यथा द्विविधं तत्त्वम् । भावोऽभावश्च । भावो(पि) द्विविधः । नित्योऽनित्यश्च । नित्यो द्विविधः । चेतनोऽचेतनश्च । चेतनोऽपि द्विविधः । स्वतन्त्रोऽस्वतन्त्रश्चेति कर्तव्यम् । एवं सति न प्राधान्येन प्रतिपत्तिःस्यात् । भगवद्व्यतिरिक्तस्य सर्वस्याप्यस्वातन्त्र्य-प्रतीतिर्नस्यात् । अस्मिन्पक्षे स्वतन्त्रस्य भावत्वं न विदितं स्यादिति सममेवेतिचेन्न । पुरुषार्थोपयोगानुपयोगाभ्यां विशेषात् । अभावा-दीनां नित्यत्वाद्यनुक्तिश्च समैव । तस्माद्यथान्यासमेवास्तु ।

---

इति ध्येयम् ॥ व्याघातादिति ॥ भावभिन्नस्य अभावतया पुनरभाव-भिन्नत्वाभिधाने व्याघातः । तथा अभावभिन्नस्य भावतया पुनः भाव-भिन्नत्वाभिधाने व्याघातादित्यर्थः । ॥ भावलक्षणेति ॥ प्रथमप्रतीतौ अस्तीत्युपलभ्यते यः सः भाव इति भावलक्षणाक्रान्तत्वात् स्वतन्त्रतत्त्वं-भाव एवेत्यर्थः । सर्वं वाक्यं सावधारणमिति न्यायेन भावाभावौ द्विधेतरत् इति वाक्यं सावधारणं तच्चावधारणं द्विधेत्यनेन संबध्यते नतु परतन्त्रार्थके तदित्यादिना । तथा च स्वतन्त्रतत्त्वस्य भावत्वाङ्गीकारे नकोऽपि दोष इत्याशयेनाह ॥ परतन्त्रमिति ॥ न पुनः परतन्त्रमेवेति॥ येन भावस्य परतन्त्रप्रभेदत्वेन स्वतन्त्रतत्त्वस्य विष्णोः भावत्वं न स्यात् इति भावः ।

रा—शङ्कते ॥ यथेति ॥ तद्धीति ॥ स्वतन्त्रतत्त्वमित्यर्थः ॥ ॥ अन्यथेति ॥ स्वतन्त्रतत्त्वस्य भावत्वार्थकविभागकरणेतु इति कर्तव्य-मित्यन्वयः । अस्त्वेवं तथापि का हानिरित्यत आह ॥ एवमितीति ॥ भावत्ववन्नित्यत्वचेतनत्वयोरपि लाभायोक्तं नित्योऽनित्य इत्यादि विभाग द्वयम् ॥सर्वस्यापीति॥ उक्तविभागे भगवदन्यचेतनमात्रस्यैवास्वातन्त्र्य-प्रतीतेरिति भावः ॥ शङ्कते ॥ अस्मिन्पक्ष इति ॥ मूलकदुक्तविभागपक्ष

इत्यर्थः ।। पुरुषार्थेति ।। मूलकृदुक्तटीकाकृदुक्तविभागद्वयपक्षेऽपि कस्य-चिदर्थस्याज्ञानसाम्येऽपि मूलकृदुक्तविभागपक्षः पुरुषार्थोपयोगी अवश्य ज्ञातव्यः प्राधान्यसर्वविभक्तत्वयोः स्वतन्त्रतत्त्वज्ञानोदयात् टीकाकृत्प्रद-र्शितविभागपक्षे तयोरज्ञानात् भावत्त्वज्ञानस्य च पुरुषार्थानुपयोगेन तदज्ञानेऽपि दोषाभावात् । मूलकृदुक्तविभागपक्षेतु पुरुषार्थोपयोगित्व-विशेषभावादित्यर्थः । अथाप्यनुपपत्तिरस्तीत्याशङ्कयाह ।।अभावादीना-मिति ।। अत्यन्ताभावध्वंसयोर्नित्यत्वं प्रागभावस्यानित्यत्वं त्रयाणाम-चेतनत्वं पारतन्त्र्यमचेतनेऽपि केषाञ्चिदनित्यत्वं पारतन्त्र्यमित्यादिकमपि टीकाकृत्प्रदर्शितविभागे। मूलकृदुक्तविभागे विष्णोर्भावत्वमेव नोक्त-मिति कस्यचिदनुक्तिरुभयत्र समैव। प्रत्युतात्र बहूनां अनुक्तिः। तत्र भावत्वस्य अनुक्तिरेवेत्यर्थः ।।तस्मादिति।। अनुक्त्योः साम्यान्मूलोक्त-विभागे विशेषसत्वाच्च मूलोक्तविभाग एवास्तु इत्यर्थः ॥

श्री—यद्यपि तत्त्वस्य भावाभावतया द्वैविध्यं शक्यते वक्तुम् । तथाप्यस्य वैयर्थ्यादयमेव विभागो न्याय्य इत्युक्तमनुसंदधानस्तत्त्वस्य भावाभावतयैव विभागः कुतो न क्रियत इत्याशयेन शङ्कते ।।यथा-भावेष्विति ।। तद्धीति ।। स्वतन्त्रतत्त्वमित्यर्थः ।। सर्वविविक्तमेवेति ।। सर्ववैलक्षण्येनैव नतु सर्वसाधारण्येनेत्यर्थः। तदर्थं स्वतन्त्रास्वतन्त्र-

---

वि—स्वातन्त्र्यास्वातन्त्र्याभ्यामेव विभागकरणे पूर्वोक्तयुक्तिमपि स्मारयति-।।भगवद्व्यतिरिक्तस्येति।। यद्यपि 'यद्यपी'त्यादिना भावत्वा-भावत्वाभ्यां विभागकरणं पूर्वमाशङ्कितम्। तथापि स्वतन्त्रायत्ततया परतन्त्रस्य ज्ञानं निःश्रेयसोपयोगीति वक्तुं पूर्वमाशङ्कितम् । इदानीन्तु स्वतन्त्रस्य प्राधान्येन सकलविविक्ततया ज्ञानं निःश्रेयसोपयोगीति निवेदयितुमिति भेद इति द्रष्टव्यम्।

वे—पुरुषार्थोपयोगेति ।। भगवद्व्यतिरिक्तस्य सर्वस्य स्वतन्त्र-प्रमेयायत्ततया ज्ञानं यथा निःश्रेयसहेतुत्वेनोपयोगि, न तथा स्वतन्त्र-तत्त्वस्य भावत्वादिज्ञानमित्यर्थः ।

भेदेनैव तत्त्वविभागः कार्य इत्याशयः। भावाभावभेदेन तत्त्वविभागो न कार्यः ॥ अन्यथेति ॥ सर्वविविक्ततया वेदनमनङ्गीकृत्य स्वतन्त्रतत्त्वस्य यथाभावेषु प्रवेशः तथा विभागकरण इत्यर्थः। पूर्वोक्तमेव वैयर्थ्यं स्मारयति ॥ एवं सतीति ॥ दूषणान्तरमाह ॥ भगवदिति ॥ सर्वस्येति॥ भावाभावनित्यानित्यरूपचेतनवर्गस्येत्यर्थः ॥ अस्वातन्त्र्येति ॥ अस्वतन्त्रस्य चेतनप्रभेदरूपत्वादि (ति भावः) त्यर्थः ॥ अस्मिन्पक्ष इति ॥ तत्त्वं द्विविधं स्वतन्त्रं परतन्त्रञ्च परतन्त्रं द्विविधं भावः अभावश्चेति विभागकरणे स्वतन्त्रतत्त्वस्य भावत्वमविदितंस्यात् भावस्य परतन्त्रभेद-रूपत्वात् इत्यर्थः ॥ सममेवेति ॥ तथाचैवं साम्ये भावाभावादिनैव तत्त्वविभागः क्रियतामविशेषादिति भावः। अविशेषोऽसिद्ध इत्याह ॥ पुरुषार्थेति ॥ स्वतन्त्रास्वतन्त्रभेदेन तत्त्वद्वैविध्यज्ञानस्य मोक्षोपयोगि-तायाः 'य एतत्परतन्त्रन्तु' इत्यादिना प्रमितत्वादन्यस्य तदभावात् इति भावः। ननु अथापि न भवदुक्तरीत्या तत्त्वविभागो युक्तः। तथाहि। तत्त्वं द्विविधम्। स्वतन्त्रं अस्वतन्त्रञ्चेति। अस्वतन्त्रं द्विविधं भावोऽ-भावश्च। भावोऽपि द्विविधः। चेतनः अचेतनश्च। अचेतनः त्रिविधः। नित्यः अनित्यः नित्यानित्यश्चेति विभागकरणे प्रध्वंसात्यन्ताभावरूपा भावस्य नित्यत्वं नोक्तं स्यात्। नित्यस्य भावप्रभेदरूपाचेतनप्रभेदरूप-त्वादित्यर्थः। तथा चेतनस्य नित्यत्वं नोक्तंस्यात्। नित्यस्याचेतन-प्रभेदरूपत्वात्। तथा स्वतन्त्रतत्त्वस्य भावत्वं नोक्तं स्यात्। भावस्या-स्वतन्त्रप्रभेदरूपत्वादित्याशङ्क्य त्वदीयविभागकरणे एतत्समानमित्याह ॥ अभावादीनामिति ॥ प्रथमादिपदेन चेतनस्वतन्त्रतत्त्वयोर्ग्रहणम्। द्वितीयादिपदेन भावत्वग्रहणम्। तथा च ध्वंसात्यन्ताभावरूपाभावयोः चेतनानाञ्च नित्यत्वानुक्तिः स्वतन्त्रतत्त्वस्य भावत्वानुक्तिश्चेत्यर्थः। इद-मुपलक्षणम्। प्रागभावस्यानित्यत्वानुक्तिः अनित्यस्य भावप्रभेदरूपा-चेतनप्रभेदरूपत्वादिति द्रष्टव्यम् ॥ समैवेति ॥ तत्त्वं द्विविधं भावः अभावश्च। भावोऽपि द्विविधः। नित्यः अनित्यश्च। नित्योऽपि द्विविधः।

टी—अथास्वतन्त्रं चेतनत्वादिनैव विभज्यताम् । किं चेतनत्वादिना विभज्य भावाभावतया विभागः कर्तव्य उतायं न कर्तव्य एव । नाद्यः । विशेषाभावात् । अभावस्य अचेतनत्वं एवं सति नोक्तं स्यादिति चेत् तथासति चेतनस्य भावत्वमपि नोक्तं स्यादिति समम् ।

---

चेतनः अचेतनश्च । चेतनोऽपि द्विविधः । स्वतन्त्रं अस्वतन्त्रश्चेति विभागकरणे अचेतनस्य अस्वातन्त्र्यं नोक्तं स्यात् । अस्वतन्त्रस्य चेतनप्रभेदरूपत्वात् । तथा अनित्यप्रध्वंसात्यन्ताभावयोः नित्यत्वं प्रागभावस्यानित्यत्वं नोक्तं स्यात् । नित्यानित्ययोः भावप्रभेदरूपत्वादित्यर्थः ॥ यथान्यायमिति ॥ 'स्वतन्त्रमस्वतन्त्रञ्च द्विविधं तत्त्वमिष्यते' इत्युक्तप्रकारेणैव द्वैविध्यमस्त्वित्यर्थः ॥

रा—परतन्त्रस्य भावत्वादिना विभागे विशेषं विवक्षुराक्षिपति ॥ अथेति ॥ अस्वतन्त्रं चेतनोऽचेतनश्चेति द्विविधम् । अचेतनोऽपि भावोऽभावश्चेति द्वेधा । इत्यादिरूपेण विभज्यताम् । किं भावत्वादिनेति भावः ॥ विशेषेति ॥ पुरुषार्थोपयोगित्वादिविशेषस्याभावादित्यर्थः । विशेषमाशङ्क्य साम्यमाह ॥ अभावस्येति ॥ एवं सतीति ॥ भावत्वादिना विभागे कृते सतीत्यर्थः ।

श्री—भावाभावतयोक्तं परतन्त्रविभागमाक्षिपति ॥ अथास्वतन्त्रमिति ॥ अस्वतन्त्रं द्विविधं चेतनोऽचेतनश्च इत्येवं विभज्यताम् । भावः अभावश्चेति किमर्थं विभज्यत इत्यर्थः ॥ किं चेतनत्वादिनेति ॥ अस्वतन्त्रं द्विविधं चेतनोऽचेतनश्चेति विभागं कृत्वा अनन्तरं अचेतनो द्विविधः भावः अभावश्चेति भावाभावविभागः कर्तव्य उतायं न कर्तव्य इत्यभिप्राय इत्यर्थः ॥ विशेषाभावादिति ॥ अस्वतन्त्रं द्विविधं भावः अभावश्च । भावोऽपि द्विविधः । चेतनः अचेतनश्चेति विभागकरणे तथा अस्वतन्त्रं द्विविधं चेतनः अचेतनश्च अचेतनं द्विविधं भावः अभावश्च इति विभागकरणेच विशेषाभावादित्यर्थः । नन्वस्ति विशेषः । भावाभावभेदेन अस्वतन्त्रं विभज्य भावस्य चेतनाचेतनत्वेन विभागकरणे

टी—तर्हि केन विशेषेणास्य प्राधान्यमिति चेत् । वादिविप्रतिपत्तिभावाभावाभ्यां विशेषात् । अत एव नद्वितीयोऽपि । इति । अभाव एव नास्तीति केचित् । तदसत् । नास्तीति प्रतीतेः दुरपह्नवत्वात् । घटो नास्तीति प्रतीतिर्भूतलमात्रविषया इति चेत् । मात्रेति किं भूतलमेवोच्यते उतातिरिक्तं किञ्चित् । आद्ये घटवत्यपि प्रसङ्गः । अतिरिक्तोऽपि घटश्चेदुक्तो दोषः । भावान्तरञ्चेत् रूपवति घटे गंधो नास्तीति प्रतीतिप्रसङ्गः ।

---

अभावस्य अचेतनत्वं नोक्तं स्यात् । अचेतनस्य अभावप्रभेदरूपत्वादिति शङ्कते ॥ अभावस्येति ॥ तथासतीति ॥ अस्वतन्त्रं चेतनत्वादिना विभज्य अचेतनस्य भावत्वादिना विभागकरणे चेतनस्य भावत्वं नोक्तं स्यात् । भावस्य अचेतनप्रभेदरूपत्वादिति सममित्यर्थः ।

रा—अस्येति ॥ भावत्वादिना विभागस्येत्यर्थः ॥ वादीति ॥ भावाभावत्वे अस्ति विवादः न चेतनत्वादौ अतः तन्निरासाय भावत्वादिविभागस्य प्राधान्यमित्यर्थः ॥ अतएवेति॥ विवादाभावादेव कर्तव्यत्वपक्षो न युक्त इत्यर्थः । विवादं प्रदर्शयन्निराह ॥ अभाव इति ॥ केचित् प्राभाकराः ॥ भावान्तरमिति ॥ नास्तीतिधीविषय इति योज्यम् ॥ ॥ रूपवतीति ॥ रूपस्यैव तत्र भावान्तरत्वादिति भावः ।

श्री—नन्वेवं साम्ये केन निमित्तविशेषेण भावाभावभेदेन अस्वतन्त्रविभागकरणस्य प्राधान्यमित्याशङ्कते ॥ तर्हीति ॥ वादिविप्रतिपत्तीति ॥ अस्वतन्त्रस्य चेतनाचेतनभेदेन विभागकरणे चेतनाचेतनपदार्थयोः सर्वैरङ्गीकृतत्वेन तत्र वादिविप्रतिपत्त्यभावात् । भावत्वादिना विभागकरणे अधिकरणातिरिक्ताभावानङ्गीकारवादिनां मीमांसकानां विप्रतिपत्तिसद्भावादित्येवं रूपात् निमित्तविशेषादित्यर्थः । प्राधान्यमिति संबन्धः ॥ अत एवेति ॥ भावाभावविभागो न कर्तव्य एवेति द्वितीयपक्षोऽप्यत एवायुक्तः । अभावे वादिविप्रतिपत्तिसद्भावेन

टी—ननु घटाभावो घटाभाववति भूतले संबध्यते उत घटवति। नाद्यः। आत्माश्रयादिदोषप्रसङ्गात्। न द्वितीयः। विरोधात्। अतो वक्तव्यं भूतलमात्र इति। तदेवास्तु नास्तीति प्रतीतिविषय इति चेत्। प्रश्न एवायं विविच्यताम्। यदि अभावसंबन्धात् प्राक् कीदृशं भूतलमिति यदि वा संबन्धसमये कीदृशमिति यद्वा यदि अभावात् इदं विविच्येत तदा कीदृशं नाम स्यादिति। आद्ये सघटमित्येवोत्तरम्। द्वितीये घटाभाववदिति। तृतीये यदि विवेको वस्तुकृतः तदा अभावस्य नष्टत्वात् घटवदिति। यदि बुद्धिकृतः तदा बुध्यैव घटप्रसक्तिमदिति। अन्यथैवं भावप्रतिक्षेपोऽपि स्यादित्यास्तां विस्तरः।

---

तस्य समर्थनीयत्वादेवेत्यर्थः। अभावपदार्थसमर्थनार्थं तामेव वादिविप्रतिपत्तिं दर्शयति ॥ अभाव एवेति ॥ केचित् मीमांसकाः ॥ भूतलमात्रेति ॥ तथा च अधिकरणातिरिक्ताभावो नास्तीति भावः ॥ घटवत्यपीति ॥ नास्तीति प्रतीतेः भूतलमात्रविषयत्वे घटवत्यपि भूतले घटो नास्तीति प्रतीतिः स्यात्। नास्तीति प्रतीतिविषयस्य भूतलस्य घटसत्तायामपि सद्भावादित्यर्थः। घटो नास्तीति प्रतीतिः भूतलातिरिक्तविषया चेत् तर्हि तत्र पृच्छामः। नास्तीति प्रतीतिविषयभूतं भूतलातिरिक्तं वस्तु किं प्रतियोगिभूतो घट एव उत प्रतियोगिभिन्नं भावान्तरमिति। नाद्य इत्याह ॥ उक्तदोष इति॥ घटवत्यपि भूतले घटो नास्तीति प्रतीतिप्रसङ्ग इत्यर्थः। द्वितीयमाशङ्क्य निषेधति ॥ भावान्तरमिति ॥ प्रतियोगिभिन्नमित्यर्थः ॥ रूपवतीति ॥ गन्धो नास्तीति प्रतीतेः प्रतियोगिभूतगन्धभिन्नघटरूपाधिकरणभिन्नरूपाख्यभावान्तरविषयकत्वं स्यात् इत्यर्थः ॥

टी—अभाववादिनंप्रति बाधकोपन्यासमुखेन स्वोक्तपक्षं स्थापयति परवादी ॥ नन्वित्यादिना ॥ आत्माश्रयादीति ॥ अभावभेदाङ्गी-

कारे अन्योन्याश्रयादिरादिपदार्थः ।। इदमिति ।। भूतलमित्यर्थः ।।अभावस्य नष्टत्वादिति ।। तस्य घटसंबन्धप्रागभावरूपत्वादिति भावः ।।भाव प्रतिक्षेपोऽपीति ।। घटोऽपि किं घटवति भूतले संबध्यते उत घटरहिते । नाद्यः । आत्माश्रयादिप्रसङ्गात् । नान्त्यः । विरोधात् । अतो भूतलमात्र इति वक्तव्यम् । स एव च घटादिप्रतीतिविषयः अस्तु किं घटादिना इत्यपि वक्तुं शक्यत्वादिति भावः ।

श्री—आत्माश्रयादीति ।। घटाभाववर्तीत्यत्र प्रष्टव्यम् । किं स्वविशिष्टे एव भूतले स्वयं संबध्यते किंवा भावान्तरेण विशिष्टे । नाद्यः । आत्माश्रयप्रसङ्गात् । स्वस्यैवाधाराधेयकोटिप्रविष्टत्वात् । न द्वितीयः । अन्योन्याश्रयादिप्रसङ्गादित्यर्थः ।। भूतलमात्र इतीति ।। घटतदभावाभ्यामविशेषितमेव भूतलं घटाभावाधिकरणमिति वक्तव्यमित्यर्थः ।। तदेवेति ।। तथाच न तदतिरिक्तः अभावोऽस्तीति भावः । घटाभावो घटाभाववति भूतले संबध्यते उत घटवतीति प्रश्नवाक्यस्य घटाभावसंबद्धं भूतलं कीदृग् इति लब्धोऽर्थः । तं विकल्प्य पृच्छति ।। प्रश्न एवायमिति ।। प्रश्नवाक्यार्थ एवेत्यर्थः ।। संबन्धसमय इति ।। घटाभावसंबन्धसमय इत्यर्थः । इदं भूतलम् ।। मघटमिति ।। अत्र सर्वत्र घटशब्देन घटसंसर्गो विवक्षितः । घटसंसर्गाभावस्य वक्ष्यमाणत्वात् ।। घटाभाववदिति ।। अस्य च नास्तीति प्रतीतिविषयत्वाङ्गीकारे पर्यवसितं विवादेनेति भावः । नचात्माश्रयः । पूर्वं अभाववति भूतले पश्चात् यद्यभावः संबध्येत तदा परं आत्माश्रयः । न चैवम् । अभावतत्संबन्धयोः भूतलाश्रितत्वस्यैककालीनत्वात् । अत एव तयो-

का—नन्वित्यादिप्रश्नवाक्यस्य षोढाव्याख्यानं संभवति । घटाभावः स्वसम्बन्धात्पूर्वं, स्वसंबन्धसमये, स्वसंबन्धानन्तरं वा यद्घटाभाववत् तत्र संबध्यते । किंवा स्वसंबंधात्पूर्वं स्वसंबन्धसमये, स्वसंबंधानन्तरंवा यद्घटवत् तत्र संबध्यत इति । एतेषांच फलतस्त्रिधैव प्रश्नपर्यवसानमित्याशयेन यथाश्रुतप्रश्नार्थं तावद्विकल्प्योत्तरमाह ।। प्रश्नएवायमिति ।। कीदृशं घटवद्घटाभाववद्वेत्यर्थः ।

टी—द्विधेत्युक्त्या भावाभावयोरवान्तरभेदोऽस्तीति सूचितम्। तत्र भावनिरूपणादभावनिरूपणस्याल्पत्वात् सूचीकटाहन्यायेन पश्चादुद्दिष्टमपि अभावं आदौ विभागेनोद्दिशति ।

॥ प्राक्प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते ॥

प्राक्त्वेन प्रध्वंसत्वेन सदात्वेन उपलक्षितः अभावः त्रिविधः इष्यते प्रामाणिकैरिति शेषः। उत्तरैकावधिः अभावः प्रागभावः। प्रतियोग्युत्पत्तेः प्रागेव अभावः अस्ति उत्पन्नेतु तस्मिन् नास्तीति कृत्वा। पूर्वैकावधिः अभावः प्रध्वंसाभावः। प्रतियोगिप्रध्वंसानन्तरमेव नतु प्रागस्तीति ।

---

रेककालीनत्वेन आत्माश्रयपरिजिहीर्षया काल एव विकल्पितः। ननु तथापि अभावसंबन्धाधिकरणतावच्छेदकं किमिति प्रश्नाशय इति चेत्। अभाववद्भूतलत्वमेवेति वदामः। नचैवमात्माश्रयः। अभावस्य तटस्थतयैव व्यावर्तकतया आश्रयकोटावप्रवेशात्। यथा घटप्रागभावत्वादीनां घटकारणतावच्छेदकत्वेऽपि घटस्य तटस्थतया व्यावर्तकत्वेन न कारणकोटौ प्रवेशः तथा प्रकृतेऽपीति नकाप्यनुपपत्तिः। तथा चातिरिक्ताभावानङ्गीकारे अधिकरणस्योक्तरीत्या अविषयत्वेन नास्तीतिप्रतीतिर्निरालम्बना स्यादिति पूर्वोक्तमुपपन्नमेवेति तात्पर्यम् ॥ यदि विवेक इति ॥ अभावादिदं विविच्येत इत्यत्र विवेको भेदो भूतलघटाभावरूपवस्तुकृत इत्यर्थः। भूतलं यदा अभावात् विविक्तं जातं तदा अभावसंबन्धो नष्ट इति यावत्। तदा कीदृशं भूतलं इति प्रश्नार्थ इति भावः ॥घटवदिति॥ घटसंबन्धवदित्येवोत्तरमित्यर्थः ॥ बुद्धिकृत इति ॥ विवेक इति वर्तते। यदा भूतले घटाभावो नास्तीति ज्ञायते तदा कीदृशं भूतलमिति प्रश्नस्य बुध्यैव घटप्रसक्तिमत् इत्युत्तरम्। तत्र प्रतियोग्यधिकरणसंसर्गज्ञानरूपघटप्रसक्त्यभावे घटाभावाभावज्ञानानुपपत्तेरित्यर्थः ॥ ॥ अन्यथेति ॥ अधिकरणातिरिक्ताभावानङ्गीकार इत्यर्थः। तत्रापि

घटोऽस्तीति बुद्धेरपि अधिकरणभूतभूतलमात्रविषयत्वस्य वक्तुं शक्यत्वात्। तथा घटो घटवतिभूतले संबध्यते उत तदभाववतीति। नाद्यः। आत्माश्रयप्रसङ्गात्। न द्वितीयः। विरोधात् इत्येवं विकल्पदूषणयोश्च समत्वादिति भावः ॥ भावप्रतिक्षेप इति ॥ भावपदार्थापलाप इत्यर्थः। किञ्च भूतलस्यैवाभावत्वे इह भूतले घटाभाव इति आश्रयाश्रयिभावानुपपत्तिः। अभावस्य प्रतियोगिसापेक्षत्वानुपपत्तिश्चेत्यादिदूषणगणदुष्टोऽयं पक्षः। ग्रन्थबहुत्वं स्यात् इत्येवोपरम्यत इत्याशयेनाह ॥ इत्यास्तां विस्तर इति ॥

रा—उपलक्षित इति ॥ स्वस्वरूपानुप्रविष्टैरेव इतरस्मात् व्यावर्तित इत्यर्थः। 'इत्थंभूतलक्षणे तृतीया' इति भावः। घटादिव्यावृत्त्यर्थं उत्तरैकेति एकपदम्। एवमग्रेऽपि। घटादेर्वक्ष्यमाणदिशा प्रध्वंसप्रागभावरूपत्वेऽपि उभयावधिमत्त्वात्। यद्वा अनित्यवस्तुस्वरूपात्मकान्योन्याभावस्य पूर्वोत्तरावधिमत्वात् तद्व्यावृत्त्यर्थं उत्तरैकेति पूर्वैकेतिचैकपदम्। 'अनित्यवस्तुनिष्ठभेदाः अनित्याः' इति टीकोक्तेः घटादिसामग्र्यां अनतिव्याप्तये अभावपदम्। एवं प्रध्वंसलक्षणेऽपि विनाशसामग्र्युत्तरकालेन अनतिव्याप्तये अभावपदम्। कुत एतदित्यतः तत्र प्राक्पदसूचितयुक्तिमाह ॥ प्रतियोगीति ॥ ननु प्रागस्तीति इति शब्दो हेत्वर्थः। एतेन मूले तृतीया हेताविल्यपि व्याख्यातं भवति।

श्री—सूचितमिति ॥ अन्यथा भावाभावौ द्वौ इत्येवोच्येत इति भावः ॥ विभागेनेति ॥ सहेति शेषः। तथा च विभागोद्देशौ करोतीत्यर्थः ॥ प्राक्त्वेनेत्यादि ॥ प्राक्त्वादिना व्यावर्तकधर्मेणोपलक्षितो व्यावर्तितो अभावः त्रिविध इत्यर्थः। अनेन प्राक्प्रध्वंससदात्वेनेति तृतीया न हेतौ। किन्तु इत्थंभूतलक्षण इति दर्शितं भवति।

---

वि—उपलक्षित इति ॥ तथाच प्रागभावत्वं, जन्याभावत्वं, सदातनाभावत्वञ्च त्रयं विभज्यतावच्छेदकमिति नोक्तदोष इति भावः।

वे—उत्तरैकावधिरिति ॥ उत्तरपदस्य केवलार्थकैकपदसमभिव्याहृतस्य पूर्वावधिनिषेधमात्रपरत्वेन उत्तरैकावधिपदस्य पूर्वावधि-

रहितत्वे सति अवधिमत्वार्थकत्वात्। एवञ्च पूर्वावधिरहितत्वेन प्रध्वंसाभावे अवधिमत्वेन सदाभावे अभावपदेनाविद्यादौ चातिव्याप्तिनिरासान्नकस्यापि वैयर्थ्यमिति नकश्चित्क्षुद्रोपद्रवः।

स—प्रामाणिकैरितिशेष इति ॥ अप्रामाणिकप्रतियोगिकत्वेन जघन्यत्वात् प्रामाणिकप्रतियोगिकत्वेन कैश्चिदङ्गीकृतत्वेऽपि प्रामाणिकाप्रामाणिकप्रतियोगिकत्वाद्गौरवात् ततः प्राक् केवलप्रामाणिकप्रतियोगिकौ प्रागभावप्रध्वंसौ निरूप्यौ। तत्रापि धर्मितोऽपि पूर्वभावी तथा निरूप्य इति तथैव मूलकृन्निर्दिदेश। तमेवानुसृत्य प्राक्त्वेन प्रध्वंसत्वेन सदात्वेनेति टिटीकिरे टीकाकृत्पादा इति बोध्यम्।

का—न च प्राक्सदात्वयोः कालधर्मत्वात् कथमभावविशेषणत्वमिति वाच्यम्। प्रागित्यादेः प्राक्तनादिपरत्वात्। नन्वेवं किञ्चिदपेक्षया प्राक्तनत्वस्य प्रध्वंसादिसाधारणत्वादतिव्याप्तिः। स्वप्रतियोगिप्राक्कालवृत्तित्वविवक्षायामपि प्रध्वंसादेः स्वात्मकस्वनिष्ठभेदप्रतियोगिभाविवस्तुप्राक्कालवृत्तित्वेनातिव्याप्तेः। स्वप्रतियोगिप्राक्कालमात्रविवक्षणेच प्रागभावस्यापि स्वात्मकनिष्ठभेदप्रतियोगिभूतवस्तूत्तरवृत्तित्वेनासंभवात्। यत्किञ्चित्प्रतियोगिप्राक्कालमात्रवृत्तित्वविवक्षणेच गौरवमित्यतो निष्कृष्टलक्षणमाह ॥ उत्तरैकावधिरिति ॥ एवञ्चोत्तरत्वनिरूपकाभावत्वं पूर्वत्वानिरूपकत्वेसति अवधित्वनिरूपकाभावत्वंवा प्रागभावत्वमिति निष्कर्षः। एतेन योऽभावो वस्तूत्पत्तेः प्रागेवास्ति स प्रागभाव इति तत्वविवेकटीकाविसंवादोऽपि निरस्तः। तस्य यथाश्रुतलक्षणत्वात् अस्य च निष्कृष्टलक्षणत्वात्। एवमग्रेऽपि पूर्वैकावधिरिति सपूर्वाभावत्वं उत्तरावधिशून्यत्वेसति सावधिकाभावत्वं वा प्रध्वंसत्वमित्यर्थः।निरवधिकोऽभाव इति। अवधित्वानिरूपकत्वे सति अभावत्वमत्यन्ताभावत्वमित्यर्थः। ध्वंसादेर्गगनादेश्च वारणाय सत्यन्तविशेष्ययोर्निवेशः ॥ केचित्तु ॥ स्वानधिकरणकालपूर्ववृत्त्यभावत्वं प्रागभावत्वम्। स्वानधिकरणकालोत्तरवृत्त्यभावत्वं ध्वंसत्वम्। सर्वकालवृत्त्यभावत्वमत्यन्ताभावत्वमित्यप्याहुः।

गु—लीलावतीकारोक्तं प्रागभावलक्षणमनुवदति ॥ उत्तरेति ॥ उत्तरं प्रतियोग्युत्पत्तेरिति शेषः। स एवावधिरविद्यमानसमय इत्यर्थः।

श्री—उत्तरैकावधिरिति ॥ यस्याभावस्य स्वापेक्षया उत्तरकाल-एव प्रतियोग्यधिकरणकाल एवेति यावत्। अवधिः अनधिकरणो न पूर्वकाल इत्यर्थः। तथा च यः अभावः प्रतियोग्युत्पत्तिकालापेक्षया प्रागेवास्ति सः प्रागभाव इति फलितोऽर्थः। अत इत्थं लक्षणवाक्यार्थ-मभिप्रेत्य लक्ष्ये उपपादयति ॥ प्रतियोग्युत्पत्तेरिति ॥ अत्राभाव इत्यनुक्तौ प्रतियोगिभूतघटोत्पत्तिकालापेक्षया प्रागेव विद्यमाने घट-सामग्र्यादौ अतिव्याप्तिःस्यात्। तदर्थं अभावपदम्। प्रतियोगिकाला-पेक्षया इत्यनुक्त्वा यः अभावः प्रागेवास्तीत्येवोक्तौ असंभवस्स्यात्। घटप्रागभावस्य तन्त्वाद्युत्पत्त्यनन्तरमपि सत्वात्। अतः प्रतियोगिकाला-पेक्षयेत्युक्तम्। तथाच नासंभवः। प्राक्पदानुपादाने प्रतियोगिभूत-घटकालापेक्षया पश्चात् विद्यमाने घटध्वंसे अतिव्याप्तिःस्यात्। तदर्थं प्रागित्युक्तम्। अवधारणाभावे घटप्रतियोगिकान्योन्याभावरूपे घटध्वंसे प्रतियोगिभूतघटकालापेक्षया पूर्वं (मपि विद्यमानेति) भावे अतिव्याप्तिः स्यात् तदर्थं प्रागेवेत्यवधारणम्। तस्य पश्चादपि विद्यमानत्वान्नाति-व्याप्तिरिति सर्वं सार्थकम्। ननु प्राक्त्वं नाम प्रागभावावच्छिन्नसमय-

---

उत्पत्तिशब्दश्च सकलकारणसमवधानार्थ एव विवक्षितो नत्वसतः सत्तासंबंधार्थः। अतो न सत्तासंबन्धदशायां प्रागभावासंभवादसंभवः। ततश्च प्रतियोग्युत्पादकसकलकारणसमवधानानन्तरमेवासन्नभाव प्राग-भाव इति फलितोऽर्थः। अत्र च घटसामग्र्यामतिव्याप्तिवारणायाभाव-पदम्। अत्यन्ताभावनिवृत्त्यै असन्निति। तस्य च सदातनत्वेनासत्वा-भावान्नतत्रातिव्याप्तिः। असन्नभावो ध्वंसोऽपीति अतिव्याप्तिनिवृत्त्यै प्रतियोग्युत्पादकसकलकारणसमवधानानन्तरमित्युक्तम्। मृदाद्युत्पादक-सकलकारणसमवधानानन्तरमपि वर्तमानत्वात् घटप्रागभावस्यासंभवो माभूदिति प्रतियोगिपदम्। उत्पत्तिपदन्तु प्रागभावस्योत्पत्तिपर्यन्तमनु-वृत्तिः नतु ततः प्राक्निवृत्तिरिति दर्शयितुं नतु लक्षणान्तर्गतम्। अनन्तरपदाभावेतु प्रतियोग्युत्पादकसकलकारणसमवधानात् पूर्वमप्या-पद्येत। ततश्च ध्वंसेऽतिव्याप्तिस्तन्निवृत्त्यर्थमनन्तरमित्युक्तमिति सर्वं सार्थकम्।

टी—न चैवं प्रागभावप्रध्वंसः प्रध्वंसप्रागभाव इति प्रवाहौ प्रसज्येते। प्रतियोगिन एव प्रागभावप्रध्वंसत्वेन प्रध्वंसप्रागभावत्वेन चाङ्गीकृतत्वात्।

---

वृत्तित्वम्। अत एवात्माश्रय इति चेन्न। प्राक्त्वस्य साधारणकालविशेषनिष्ठस्य स्वभावतया घटत्वादिवदखण्डधर्मत्वाङ्गीकारात्। उक्तञ्च भगवत्पादैः। 'स्वत एव काले विशेषाङ्गीकृतेश्च' इति। ॥ पूर्वैकावधिरिति ॥ यस्याभावस्य पूर्वकाल एव अवधिः अनधिकरणसमयः नोत्तरकाल इत्यर्थः। तथा च यः अभावः प्रतियोगिकालापेक्षया उत्तरकाल एवास्ति सः प्रध्वंस इति पर्यवसितोऽर्थः। इममेवार्थमभिप्रेत्य लक्ष्ये उपपादयति ॥ प्रतियोगीति ॥ अत्राभावपदानुपादाने प्रतियोगिकालापेक्षया उत्तरकाल एव विद्यमाने उत्तरकाले अतिव्याप्तिः स्यात्। तदर्थमभावपदम्। प्रतियोगिकालापेक्षया इत्यनुक्तौ असंभवः। पटध्वंसस्य तन्त्वाद्युत्पत्तिकालात् प्रागपि सत्वादतः प्रतियोगिकालापेक्षया इत्युक्तम्। तथा च नासम्भवः। उत्तरेत्यनुक्तौ घटप्रतियोगिकालात्प्राक्काले विद्यमाने प्रागभावेऽतिव्याप्तिःस्यात्तदर्थं उत्तरपदम्। अवधारणानुक्तौ घटप्रतियोगिकान्योन्याभावात्मके पटप्रागभावे प्रतियोगिभूतघटकालापेक्षया परतोऽपि विद्यमाने अतिव्याप्तिःस्यात्। तदर्थं उत्तरकाल एवेत्युक्तम्। तस्य प्रागपि सत्वान्नातिव्याप्तिरिति न पदानां वैयर्थ्यमित्यवधेयम्। अन्येतु उत्तरेत्यस्य विनाश्यभाव इत्यर्थः। पूर्वेत्यस्य प्रागभावप्रतियोग्यभाव इत्यर्थ इत्याहुः। तच्चिंत्यम्। प्रागभावप्रध्वंसनिरूपणयोः परस्परसापेक्षत्वेन परस्पराश्रयप्रसङ्गादिति। उत्तरैकावधिरिति प्रागभावस्य विनाश्यभावत्वमुक्तम्। पूर्वैकावधिरिति प्रध्वंसस्य साद्यभावत्वमुक्तम्।

रा—प्रागभावनाशः प्रतियोगिनः अन्यः प्रध्वंसप्रागभावोऽपि तथेत्युपेत्य शङ्कते ॥ नचैवमिति ॥ प्रागभावप्रध्वंसयोर्नाशप्रागभावाङ्गीकार इत्यर्थः।

टी—तर्हि घटप्रध्वंसो नाम प्रागभावनिवृत्तेर्निवृत्तिरिति प्रागभावोन्मज्जनप्रसङ्ग इति चेन्न। घटवत् घटप्रध्वंसस्यापि तद्विरोधित्वात्। निरवधिकोऽभावः सदाभावः। सदाभावोऽस्तीतिकृत्वा।

---

श्री—तत्र प्रागभावप्रतियोगिकध्वंसः ध्वंसप्रतियोगिकप्रागभावश्च प्रतियोग्यतिरिक्त एवेति मत्वा शङ्कते ॥ नचैवमिति ॥ तथाच घटप्रागभावस्य विनाश्यभावत्वात्तस्य परः प्रागभावः। तस्यापि विनाश्यभावत्वेन परः प्रध्वंसः। तस्यापि पुनः सादित्वेन परः प्रागभावः इत्येकः प्रवाहः। तथा घटप्रध्वंसस्यापि प्रागभावप्रतियोग्यभावत्वेन परः तत्प्रागभावः तस्यापि विनाश्यभावत्वेन परः प्रध्वंसः तस्य च प्रागभावप्रतियोगित्वेन अपरः प्रागभाव इति अपरप्रवाह इति द्वौ प्रवाहौ द्वे परम्परे प्रसज्येते इत्यर्थः। तथा च प्रवाहद्वयेऽपि अनवस्था स्यादितिभावः। कुतो न सप्रज्येत इत्यत आह ॥प्रतियोगिन एवेति॥ स्यादेवं घटप्रागभावध्वंसो घटातिरिक्तः स्यात्। नचैवम्। प्रतियोगिनो घटस्यैव प्रागभावध्वंसरूपत्वात्। यथाहुराचार्याः। 'प्रतियोग्यापत्तेरेवाभावप्रतिपत्तित्वस्य प्रागभावे दृष्टत्वात्' इति। तथा च घटप्रवाह प्रयुक्ता नानवस्था। तथा घटप्रध्वंसप्रागभावोऽपि न घटातिरिक्तः प्रतियोगिनो घटस्यैव प्रध्वंसप्रागभावत्वेन द्वितीयप्रवाहप्रयुक्तानवस्थापि नास्तीत्यर्थः। प्रागभावनिवृत्तेः निवृत्तिरितीति ॥ घटप्रागभावनिवृत्तिरूपो घटः तन्निवृत्तिरूपो घटध्वंस इत्यर्थः। उन्मज्जनमिति ॥ नष्टस्य पुनरापत्तिरित्यर्थः। अभावाभावे भाववत् घटप्रागभावध्वंसनिवृत्तौ च घटप्रागभावस्यैवापत्तिस्स्यादिति भावः। ॥ घटवदिति ॥ यथा घटसत्तादशायां घटप्रागभावो नास्ति। घटस्य प्रागभावविरोधित्वात्। एवं घटप्रागभावनिवृत्तेर्निवृत्तिर्नाम घटध्वंस एव तत्सत्तादशायां न प्रागभावापत्तिः। घटध्वंसस्यापि प्रागभावविरोधित्वादित्यर्थः॥

रा—कुत एतत् इत्यतः तृतीयार्थमाह ॥ सदाभावोऽस्तीति कृत्वेति ॥ यथासंभवमिति ॥ यदि घटसंसर्गो भावी तदा प्रागभावः।

टी—अथात्यन्ताभाव इति प्रसिद्धसंज्ञातिक्रमेण सदाभाव इति संज्ञान्तरकरणं किमर्थम्। लक्षणस्याप्युद्देशेनैव सूचनार्थम्। यच्चान्यैरत्यन्ताभावस्वरूपमुक्तं संसर्गप्रतियोगिकाभावोऽत्यन्ताभाव इति यथैतद्घटैतद्भूतलसंसर्गाभाव इति तदपि निराकर्तुमेतत्। तस्य निरवधिकत्वाभावात्। तर्हि उदाहृतश्चतुर्थःस्यादिति चेन्न। तस्यापि यथासंभवं प्रागभावादिष्वन्तर्भावात्॥

---

यदि भूतः तदा ध्वंसः। न कदापिचेत् तदा अत्यन्ताभाव इत्येवं यथासंभवमित्यर्थः।

श्री—निरवधिक इति॥ प्रतियोगिकालावधिकपूर्वत्वापरत्वरहिताभावः। तथा च यो अभावः कालत्रये अस्ति सः अत्यन्ताभाव इति निर्गलितोऽर्थः। इममेवार्थमभिप्रेत्य लक्ष्ये उपपादयति॥ सदेति॥ नित्ये गगनादावतिव्याप्तिपरिहारायाभावपदम्। प्रागभावध्वंसयोरतिव्याप्तिपरिहाराय कालत्रयेऽस्तीत्युक्तमित्यवगन्तव्यम्। शङ्कते॥ ॥ अथेति॥ उत्तरमाह॥ लक्षणस्यापीति॥ यद्यपि अत्यन्ताभाव इति

---

का—तर्हीति...। स्यादेतत्। कदापि घटसंसर्गशून्ये घटो नास्तीति प्रतीयमानस्तावन्नप्रागभावादिः ध्वंसप्रागभावयोः प्रतियोगिसमानदेशत्वनियमात्। नाप्यत्यन्ताभावः। तस्यासन्मात्रप्रतियोगिकत्वात्। घटादेश्च सत्वादिति चेदत्राहुः। तत्र घटोनास्तीत्यादौ तद्देशघटसंसर्ग एव प्रतियोगितया भासते। तस्य चासत्वात् तत्प्रतियोगिकात्यन्ताभाव एव तत्र विषय इति। यदितु घट एव तद्देशनिष्ठात्यन्ताभावप्रतियोगितया भासते तदापि तद्देशारोपित एव तथा। न चैवं घटवत्यपि घटो नास्तीति प्रतीत्यापत्तिः। प्रतियोगिनोऽसत्वादिति वाच्यम्। प्रतियोगिनेव प्रतियोग्यारोपप्रधानेनापि अभावस्य विरोधात् घटवति च प्रतियोग्यसत्वेऽपि प्रधानभूतघटस्यैव सत्वात्। प्रधानत्वादेव च तस्यापि प्रतियोगित्वव्यवहार इतिदिक्।

उद्देशेऽपि अत्यन्तपदार्थविचारे सति अयमेवार्थो लभ्यते। कालत्रयार्थकसदाशब्दार्थतात्पर्यकत्वात्तस्यापीत्यविशेष एव। तथाप्यविलम्बेन लक्षणोपस्थित्यर्थं तथोक्तमिति ध्येयम्। प्रसिद्धसंज्ञातिक्रमे निमित्तान्तरं वक्तुमाह ।। यच्चान्यैरित्यादिना ।। संसर्गप्रतियोगिकेति ।। अन्योन्याभावस्य तादात्म्यप्रतियोगिकत्वेन संसर्गप्रतियोगिकत्वाभावात्प्रागभावप्रध्वंसयोश्च एतन्मते संसर्गाभावत्वाभावेन न कुत्राप्यतिव्याप्तिरिति भावः। तदुदाहरति ।। यथैतद्घटेति ।। इह भूतले घटो नास्तीत्येवं रूप इत्यर्थः ।। एतदिति ।। सदाभावपदमित्यर्थः। अत्रापि यद्यप्यत्यन्ताभाव इत्युद्देशेपि परमतनिराकरणं लभ्यत एव। अत्यन्तसदाशब्दयोर्विचार्यमाणे एकार्थत्वात्। तथापि स्फुटतया तल्लाभार्थमेतदुक्तमित्यवगन्तव्यम्। कथमनेन तन्निराकरणमित्यत आह ।। तस्येति ।। सदाभावशब्दस्य निरवधिकाभावार्थकत्वेन एतद्घटैतद्भूतलसंसर्गप्रतियोगिकाभावस्योत्पत्तिविनाशप्रतीतिबलेन प्रतियोगिकालावधिकपूर्वत्वापरत्वराहित्यरूपनिरवधिकत्वाभावेन त्रैकालिकनिषेधरूपसदाभावत्वाभावादित्यर्थः ।। तर्हीति ।। इह भूतले घटो नास्तीति प्रतीतिसिद्धस्यैतद्घटैतद्भूतलसंसर्गाभावस्योत्पत्तिविनाशशीलत्वेन प्रागभावादित्रितयभिन्नतया तुरीयाभावो भवद्भिरङ्गीकार्यःस्यादित्यर्थ। ।। तस्यापीति ।। एतद्घटैतद्भूतलसंसर्गाभावस्यापीत्यर्थः ।।यथासंभवमिति।। एतद्घटैतद्भूतलसंसर्गस्य भावित्वे प्राक् तदभावःप्रागभावे, तस्यातीतत्वे पश्चात्तदभावो ध्वंसे, कदाप्यसत्वनिश्चये तदभावः अत्यन्ताभावे, अन्तर्भवतीत्यर्थः। ननु घटप्रतियोगिक एवायमभावो न संसर्गप्रतियोगिकः। घटस्यैव प्रतियोगित्वेन व्यवहारादितिचेन्न। संसर्गवत् घटस्यापि संसर्गाभावविरोधितया भूतले घटाभाव इति व्यवहारे घटपदे उपचारेण संसर्गस्यैव विवक्षितत्वादिति। नहि घटस्य प्रतिषेध्यस्वरूपत्वरूपं प्रतियोगित्वं संभवति। तथाहि भूतले घटोऽस्तीति प्रतीतौ घटसंबन्धवत् भूतले घटो नास्तीत्यत्रापि घटसंबन्धाभावस्य प्रतीतेः। किञ्च इह भूतले घटो

टी—एकेब्रुवते । संसर्गाभावोऽन्योन्याभावश्चेति द्विविध एवाभाव इति । अन्येतु प्राक्प्रध्वंसात्यन्तान्योन्याभावात्मा चतुर्विध इति । तदुभयं निराकर्तुमिष्यत इत्युक्तम् । अन्योन्या-

---

नास्तीतिबुद्धेः घटाभावविषयकत्वे नतावदयं घटप्रागभावो ध्वंसोवा प्रतियोगिसमानकालीनत्वादेतस्य । नाप्यत्यन्ताभावः । कदाचित्तत्र घटस्य सत्वात् । संसर्गस्य भूतत्वे ध्वंसः भावित्वे प्रागभावः कदाप्यभावे अत्यन्ताभाव इति न काप्यनुपपत्तिरित्युक्तम् । अत्र कश्चित् घटात्यन्ताभाव एवायं घटकालेतु असंबन्धान्नभाति । घटात्यन्ताभावस्य भूतलेन सह संबन्धश्च तत्संयोगध्वंस एवेत्याह । तत्तुच्छम् । संबन्धान्तरमन्तरेण तदुपाश्लिष्टभावत्वरूपक्लृप्तसंबन्धत्यागेन संयोगध्वंसस्य संबन्धत्वकल्पने आवश्यकसंयोगध्वंसादेरेव एतद्धीविषयत्वोपपत्तेः । अन्यथा घटस्य कपाले अत्यन्ताभाव एव । घटकालेतु आश्रयाश्रयिभावध्वंसरूपसंबन्धस्य वा घटसंबन्धप्रागभावरूपध्वंसस्यवा अभावात् न प्रतीतिरिति घटात्यन्ताभावः केवलान्वयी स्यादिति । अपरस्तु उत्पत्तिविनाशशीलोऽयं अपर एव तुरीयो घटाभावः प्रतीयत इत्याह । तदपिमंदम् । घटाभावनाशस्य घटस्वरूपतायाः प्रागुक्तत्वेन घटाभावस्य घटसमानकालीनत्वानुपपत्तिः । नाशस्य स्वप्रतियोगिभिन्नकालीनतानियमात् । तदेवं भूतले घटो नास्तीत्यत्र घटतत्संबन्धभानेऽपि नास्तीत्यत्र संसर्गएव निषिध्यते । घटस्यतु तत्काले सत्वेन प्रतियोगित्वासंभवेपि विरोधितासाधर्म्येण मुख्यत एव प्रतियोगिताव्यवहार इति उक्तमेव युक्तम् । उक्तञ्च उदयनेनापि । 'इह भूतले घटो नास्तीत्यत्र संयोग एव निषिध्यते' इति । न च वाच्यं घटवत् तत्संयोगस्याप्यन्यत्र सत्वेनाप्रतियोगित्वमिति । एतद्भूतलैतद्घटसंसर्गस्य निषेधकाले कुत्राप्यभावादिति संक्षेपः ॥

रा—॥ द्विविध एवेति ॥ संसर्गाभावोऽपि प्रागभावादिभेदेन त्रिविध इत्यपि ध्येयम् ॥ अन्यत्रेपि ॥ तत्त्वविवेकादौ 'भावाभाव-

भावोहि भेदएव सच स्वरूपमेवेत्यन्यत्रोपपादितम् । कार्यकारणयोः संसर्गस्यान्यत्रनिराकृतत्वेन प्रागभावप्रध्वंसाभावयोः संसर्गाभावत्वानुपपत्तेश्चेति ।

---

स्वरूपत्वान्नान्योन्याभावता पृथक्' इत्यादिनेति भावः । प्रागभावादेस्संसर्गाभावत्वं वदतां मतं निराह ॥ कार्येति ॥ तन्तुपटयोः संसर्गप्रतियोगिकः प्राचीनः प्रागभावः उदीचीनः प्रध्वंसः उभावपि तन्त्वादिसमवायिकारणनिष्ठतया प्रतियोगिना समानदेशौ भिन्नकालीनावितिमतमयुक्तम् । उपादानोपादेययोरभेदप्रतिपादनेन संसर्गस्यान्यत्र तत्वविवेकादौ निरस्तत्वेनेत्यर्थः ।

श्री—द्विविध एवेति ॥ एतन्मते संसर्गाभावत्वादिकं तु संसर्गाभावविभाजकोपाधिरितिद्रष्टव्यम् ॥ चतुर्विध इति ॥ एतन्मते प्रागभावत्वादिकमभावविभाजकोपाधिरेव न संसर्गाभावविभाजकोपाधिरितिज्ञातव्यम् । 'भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक्' इत्युक्तत्वेन पक्षद्वयेप्यन्योन्याभावस्य भावप्रभेदरूपत्वादित्याह ॥ अन्योन्याभावोहीति ॥अन्यत्रेति॥ तत्त्वनिर्णयादावित्यर्थः । मतद्वयेऽपि प्रागभावप्रध्वंसाभावयोरपि संसर्गाभावत्वं नास्तीत्याह ॥ कार्यकारणयो-

---

वें—तदुभयमिति ॥ मतद्वयेऽपि अभावचतुष्टयसाम्येऽपि वैशेषिकपरिभाषितं साक्षादभावविभाजकोपाधिद्वित्वं अक्षपादपक्षलक्षीकृतं तादृशोपधिचतुष्ट्वमभिप्रेत्योभयमित्युक्तमिति ज्ञेयम् । कार्येति ॥ सति ह्युपादानोपादेययोः संसर्गे तत्संसर्गप्रतियोगिकत्वात् संसर्गावच्छिन्नप्रतियोगिकत्वाद्वा प्रागभावप्रध्वंसयोः संसर्गाभावत्वं स्यात्, स एव नास्तीति भावः । प्रामाणिकसंसर्गप्रतियोगिकस्याभावस्य नात्यन्ताभावत्वमित्युक्तम् । अत्यन्तासत्प्रतियोगिकस्यत्वत्यन्ताभावस्य न संसर्गप्रतियोगिकत्वमिति, उभयथापि नात्यन्ताभावस्य संसर्गाभावत्वमिति वा उक्तार्थतात्पर्यम् ।

टी—भावं विभज्य दर्शयति ॥

**चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः ॥ २ ॥**

नकेवलमभावो भेदवान् किन्तु भावोऽपीत्यपिशब्दः। चेतयतीति चेतनः। अनेवंविधोऽचेतनः। तेन विष्णोश्चेतनत्वमभावस्याचेतनत्वञ्च ज्ञातव्यम्।

---

रिति ॥ उपादानोपादेययोरित्यर्थः। संसर्गस्येति ॥ संबन्ध्यतिरिक्तस्य समवायरूपस्य संसर्गस्येत्यर्थः। इदमुक्तं भवति। संसर्गाभावत्वं नाम संसर्गप्रतियोगिकाभावत्वं वा। संसर्गारोपपूर्वकप्रमितिविषयाभावत्वं वा। नाद्यः। सतिहि उपादानोपादेययोः संसर्गे उपादाने पूर्वकालसंबन्धः। उपादेयसंसर्गप्रतियोगिकोऽभावः प्रागभावः। तथोत्तरकालसंबद्ध उपादेयसंसर्गप्रतियोगिकोऽभावः प्रध्वंस इतिस्यात्। नचैवं। उपादानोपादेययोरभेदाङ्गीकारेण संसर्गस्यैवाभावात्। प्रागभावादीनां घटप्रतियोगिकत्वोपलंभेन संसर्गप्रतियोगिकत्वस्य त्वयानङ्गीकाराच्च। नद्वितीयः। मृत्पिण्डे घटसंसर्गो यः कश्चिदारोप्यते उत समवायः। नाद्यः। संसर्गसामान्यस्य सत्वेन आरोपासंभवात्। न द्वितीयः। समवायस्याप्यन्यत्र निराकृतत्वादिति।

रा—चेतयतीति ॥ स्वार्थेणिच्। चिती संज्ञाने। चेतते सम्यक् जानातीति बहुलग्रहणात् कर्तरि ल्युट्। यद्वा हेतुमत्येव णिच्। परान् बोधयतीत्यर्थः। चिती संज्ञान इत्यतो ण्यन्तात् ण्यास श्रंथो-युजिति ण्यन्तात् स्त्रियां युच्प्रत्यये अनादेशे णेरनिटीति णिलोपे चेतनेति रूपम्। अर्श आद्यच् प्रत्यये चेतनासंज्ञा तद्वांश्चेतन इति रूपमिति भावः। अनेवंविधो ज्ञानहीन इत्यर्थः ॥ तेनेति ॥ एवं निर्वचनेनेत्यर्थः।

श्री—ननु भावोऽपीत्यपिशब्दो नाभावद्वित्वसमुच्चयार्थः। अभावे त्रित्वस्योक्तत्वादित्यतोऽवान्तरभेदवत्तामात्रसमुच्चायकोऽयमपि-शब्दइत्याशयेनाह ॥ नकेवलमिति ॥ ननु चेतनाचेतनयोर्लक्षणाकथ-

टी—सर्वमचेतनं चेतनार्थमिति चेतनस्य प्राधान्यात्पूर्वमुद्देशः। मृदब्रवीदित्यादिवचनात्सर्वं चेतनमेवेति मतनिरासाय मत इत्युक्तम्। तच्चाभिमान्यधिकरणे निरस्तम्। चेतनादिविभागस्य नित्यादिविभागादभ्यर्हितत्वात्स एवादावुदाहृतः।

---

नान्न्यूनतेत्याशङ्कां परिहरन् संज्ञानिरुक्त्यैव लक्षणे लब्धे इत्याह ॥ चेतयतीत्यादिना ॥ जानातीत्यर्थः। ज्ञानाधिकरणत्वमितियावत् ॥ अनेवंविध इति ॥ नजानातीत्यचेतनः। ज्ञानानधिकरणमिति यावत्। ननु चेतनशब्दः प्राणीतुचेतनो जीवो जन्तुजन्यशरीरिण इत्यभिधानबलात् जीवएव प्रसिद्धः। तथाच विष्णोश्चेतनत्वं न स्यात्। तथा अचेतनशब्दो घटादिभावपदार्थ एव प्रसिद्धः। तथा चाभावस्याचेतनत्वं न स्यादित्याशङ्कां परिहरन्नाह ॥ तेनेति ॥ चेतनलक्षणाक्रान्तत्वेनेत्यर्थः। तथा चेतनाचेतनशब्दयोः यौगिकत्वेन विष्णवभावयोः चेतनाचेतनत्वे नानुपपन्ने इति भावः।

रा—चेतनार्थमिति ॥ तददृष्टजत्वादितिभावः। अथातो विभूतयोऽस्य पुरुषस्येत्युक्तदिशा भगवद्भोगार्थत्वाद्वेतिभावः ॥ अभिमान्यधिकरण इति ॥ 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इति युक्तिपादीयतृतीयाधिकरणे 'मृदब्रवीत् आपोऽब्रुवन् तत्तेज ऐक्षत ओषधयः संवदंत' इत्यादिवाक्यमप्रमाणम्। मृदादिकं-नवक्तृत्वादिमत्-जडत्वात्-मृत्वात्-इति युक्तिविरुद्धत्वात्-इति प्राप्ते निर्दोषवेदवाक्यस्य निरवकाशयुक्तेश्चाप्रामाण्यायोगात्प्रमाणभूतोभयान्यथानुपपत्या मृदादिशब्दानां तदभिमानिचेतनपरत्वस्यावश्यं कल्प्यत्वा-

---

का—चेतयतीति ॥ जानातीत्यर्थः। यद्यपि रूढ्या चेतनाचेतनपदाभ्यां चित्त्वजडत्वरूपजातिविवक्षापि संभवति। तथापि ज्ञातृत्वाज्ञातृत्वरूपव्यावर्तकलक्षणलाभाय योगाश्रयणम्। ज्ञातृत्वञ्च ज्ञानस्वामित्वं ज्ञानाश्रयत्वस्यान्तःकरणसाधारणत्वादित्यवधेयम्।

टी—यथोद्देशं चेतनविभागमाह ॥

**दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम् ॥**

कदाचिद्दुःखसंबद्धमेव दुःखस्पृष्टम् । कदापि दुःखासंबद्धं तदस्पृष्टम् । कल्पितत्वाद्दुःखादीनां न किञ्चिद्दुःखस्पृष्टमित्येके । ईश्वरातिरिक्तं

---

दित्युक्तत्वान्न मृदादिजडस्यैव वक्तृत्वादिना चेतनत्वं कल्प्यमिति निरस्तमित्यर्थः ॥ अभ्यर्हितत्वादिति ॥ नित्यानित्यविभागेनेति वक्ष्यमाणविभागस्याचेतनविषयत्वाच्चेतनस्योक्तदिशा प्राधान्याद्वा मोक्षोपयोगित्वाद्वा अभ्यर्हितत्वमिति भावः ।

श्री—चेतनस्य पूर्वमुद्देशे निमित्तमाह ॥ सर्वमचेतनमिति ॥ धनधान्यघटादिकमित्यर्थः ॥ चेतनार्थमिति ॥ चेतनोद्देश्यकमित्यर्थः ॥ मृदब्रवीदित्यादीति ॥ 'मृदब्रवीत् आपो अब्रुवन् ओषधयः संवदन्त' इत्यादिवचनादित्यर्थः ॥ सर्वमिति ॥ मृन्नवक्त्री – जडत्वात् – इत्यनुमानविरुद्धत्वेन अचेतने मृदादौ वचनक्रियायोगात् तदन्यथानुपपत्त्या मृदादिकं सर्वं चेतनमित्यर्थः ॥ तच्चेति ॥ 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इत्यधिकरणे मृदादिशब्दानां तदभिमानिदेवतावाचित्वसमर्थनेन तन्मतं निरस्तमित्यर्थः । ननु नित्यानित्यादिभेदेन अचेतनविभागमादावकृत्वा चेतनविभाग एवादौ कस्मादुत्तरग्रन्थे क्रियत इत्यत आह ॥ चेतनादीति ॥ चेतनविभागस्य आदिपदेन चेतनप्रभेददुःखस्पृष्टादिविभागस्येत्यर्थः । नित्यादीत्यादिपदेन अनित्यादिग्रहणम् । तथा च नित्यं अनित्यं नित्यानित्यं एवमचेतनविभागादित्यर्थः । ॥ अभ्यर्हितत्वादिति ॥ सर्वमचेतनं चेतनोद्देश्यकमिति चेतनस्य प्राधान्यादित्यर्थः ॥ उदाहृत इति ॥ दुःखस्पृष्टमित्याद्युत्तरग्रन्थेनेतिशेषः ।

---

का—कदाचिदिति ॥ सर्वदा दुःखसंबन्धत्वविवक्षायामसंभवः स्यादतः कदाचिदित्युक्तम् । दुःखस्यान्तःकरणधर्मत्वात्संबन्धपदम् ।

सर्वमपि दुःखस्पृष्टमेवेत्यन्ये। तदुभयनिरासायैवकारः। आद्यस्य प्रत्यक्षविरुद्धत्वात् द्वितीयस्यागमविरुद्धत्वात्।

---

रा—॥ आगमेति ॥ तत्वविवेकरूपागमेत्यर्थः। 'नित्यानंदज्ञानबला देवाः नैवन्तु दानवाः' इत्याद्यागमेति वार्थः। यद्वा 'द्वौवाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ' इत्याद्यागमेत्यर्थः।

श्री— न्यूनतापरिहाराय उद्देशेनैव तयोर्लक्षणं लब्धमित्याह ॥ कदाचिदिति ॥ मुक्तेष्वव्याप्तिपरिहाराय कदाचिदित्युक्तम्। तेषां पूर्वं दुःखसंबन्धसद्भावान्नाव्याप्तिः। ॥ कदापीति ॥ मुक्तेष्वतिव्याप्ति परिहारायोक्तं कदापीति। दुःखसंबन्धात्यन्ताभाववदित्यर्थः। तथा च नातिव्याप्तिरितिभावः। केचित्तु दुःखस्पृष्टलक्षणे सर्वदा दुःखसंबन्धस्याभावात्तत्परिहाराय कदाचिदित्युक्तमित्याहुः। तन्न। दुःखसम्बन्धवदित्येवोक्ते कदाचित् दुःखसम्बन्धमादाय लक्ष्ये लक्षणसत्वेनासंभवशङ्कानवकाशात्। सर्वथा लक्षणस्य लक्ष्यावृत्तित्वेहि असंभवः। दुःखशब्देन दुःखयतीति व्युत्पत्त्या प्रकृतिसंबन्धरूपायाः संसृतेर्विवक्षितत्वेन संसारिणि सुषुप्त्यवस्थायां तत्सद्भावेनातिव्याप्तेरप्यसंभवाच्च। अत एव तत्त्वविवेके सृतियुगिति व्यवहृतमिति द्रष्टव्यम् ॥ सर्वमपीति॥ तथा च रमाया अपि दुःखस्पृष्टत्वमेवेति तेषामभिप्रायः ॥ आद्यस्येति ॥ दुःखादीनां कल्पितत्वस्य तत्सत्यताग्राहिप्रत्यक्षादिप्रमाणविरुद्धत्वादित्यर्थः ॥ द्वितीयस्येति ॥ रमाया अपि दुःखस्पृष्टत्वाभिप्रायेणेश्वरातिरिक्तस्य सर्वस्यापि दुःखस्पृष्टत्वमिति पक्षस्य तत्त्वविवेकाख्यागमविरुद्धत्वादित्यर्थः। यथोक्तं तत्वविवेके। 'श्रीर्नित्यमुक्ता' इति।

---

दुःखानुभवोपलक्षितमित्यर्थः। मुक्तजीवानामपि पूर्वतनदुःखानुभवोपलक्षितत्वान्नासङ्ग्रहः।

येतु सत्संग्रहानुरोधेन दुःखसंसर्गात्यन्ताभावानधिकरणत्वं दुःखस्पृष्टत्वमिति वर्णयन्ति, तेषामभावस्य भावनिरूप्यत्वाद्दुःखस्पृष्टस्य प्रथममुद्देश इत्युत्तरटीका न संगच्छते। निरुक्तदुःखस्पृष्टत्वस्यापि प्रति-

टी—परमेश्वरस्य दुःखास्पृष्टत्वं स्वातन्त्र्येणैव सिद्धम् । यद्यप्यनयोः दुःखास्पृष्टं चेतनं प्रधानं तथाप्यभावस्य भावनिरूप्यत्वात् दुःखस्पृष्टस्य प्रथममुद्देशः । तथापि प्राधान्यक्रमस्य मुख्यत्वात्तदनुसारेण द्वे अपि निर्दिशति ।

**नित्यादुःखा रमान्येतु स्पृष्टदुःखाः समस्तशः ॥ ३ ॥**

अन्ये चेतनाः । एकेतु व्यष्टिसमष्टिभेदेन जीवान् परिकल्प्य गरुडानन्तविष्वक्सेनादीन्समष्टिजीवानपि नित्यादुःखानाचक्षते । तन्निरासाय समस्तश इत्युक्तम् । अत्रचागमानां प्रामाण्यम् । अत

रा—अत्रचेति ॥ श्रीश्रीपतिभ्यामन्ये जीवाः स्पृष्टदुःखा इत्यत्र 'अतोऽन्यदार्तं' 'जीवा एवतु दुःखिनः' इत्याद्यागमानां प्रामाण्यं ध्येयमित्यर्थः । अत एवेत्यस्य विवरणं दुःखास्पृष्टे प्रभेदाभावादिति । सर्वस्य स्पृष्टदुःखत्वादेवेति वार्थः । संख्यायाः विधार्थे धा इत्युक्तधा प्रत्ययस्य दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनमित्यत्रोक्तेरिति भावः । ॥ अत एवेति ॥ धा प्रत्यये अवान्तरभेदस्य सूचनादेवेत्यर्थः ।

योगिनिरूप्यत्वात् । कथं तर्हि संसारसंसर्गात्यन्ताभावानधिकरणत्वमिति तत्वविवेकटीकामन्दारमञ्जरीसंगच्छत इति चेन्न । तत्वविवेके नित्यमुक्तस्यैव प्रथममुद्देशेन तदुपपत्तेः । इह तद्रीत्या व्याख्यानं तु टीकायाः यथाश्रुतदुःखस्पृष्टत्वपरतयैव सङ्गमनीयम् ।

वि—आगमानामिति ॥

'दुःखासम्पीडनत्वात् मध्यमो वायुरुच्यते ।
दुःखस्य योगतो भोगात् रुद्रवीन्द्रादयोऽधमाः' ॥

इति मूलभूतागमानामित्यर्थः ।

का—आगमानामिति ॥

'न हवै सशरीरस्य सतःप्रियाप्रिययोरपहतिरस्ति ।
निर्दुःखोहि हरिर्नित्यं श्रीश्चान्ये दुःखभागिनः' ॥

इत्याद्यागमानामित्यर्थः ।

एव दुःखास्पृष्टे प्रभेदाभावात् दुःखस्पृष्टापेक्षयैव धाप्रत्ययः पूर्वोक्तो ज्ञातव्यः ।

---

श्री—ननु रमायाः अस्वतन्त्रचेतनस्य दुःखास्पृष्टत्वलाभेऽपि ईश्वरस्य दुःखास्पृष्टत्वमलब्धमित्यपेक्षायामाह ।। परमेश्वरस्येति ।। स्वतन्त्रमस्वतन्त्रञ्चेति आदौ स्वातन्त्र्येण उद्देशादेव दुःखास्पृष्टत्वं सिद्धमित्यर्थः । स्वातन्त्र्यस्य दुःखाभावोपपादकत्वादिति भावः । तथाचायं प्रयोगः ईश्वरः—न दुःखवान्—तज्जिहासुत्वे सति स्वतन्त्रत्वात् । यो यज्जिहासुत्वे सति स्वतन्त्रः सः तदभाववान् । यथा सम्मत इति । उक्तञ्चानुव्याख्याने । 'यदधीना गुणाश्चैव दोषा अपि हि सर्वशः । गुणास्तस्य कथं न स्युः स्युर्दोषाश्च कथं पुनः' इति । अत्र दुःखस्यापि दोषकार्यत्वात् दोषशब्देन दुःखस्यापि ग्रहणमिति ज्ञातव्यम् । अनयोः दुःखस्पृष्टतदस्पृष्टयोर्मध्ये ।। प्रधानमिति ।। तथाच तदेव प्रथममुद्देष्टव्यमिति भावः । तर्हि उद्देशानुसारेणैव निर्देशोऽपि कस्मादादौ नक्रियत इत्यत आह ।। तथापि प्राधान्यक्रमस्येति ।। नन्वेवं प्राधान्यक्रमस्य मुख्यत्वादेव प्रथममुद्देशोऽपि तथैव कस्मान्नकृत इति चेन्न । प्रतियोगिज्ञानं विना प्रथमं दुःखास्पृष्टस्य ज्ञातुमशक्यत्वात् । न चैवं निर्देशोऽपि तथैव स्यादिति वाच्यम् । उद्देशेनोभयोर्ज्ञाने निर्देशे प्राधान्यक्रमस्यादर्तुमुचितत्वादिति भावः ॥ द्वे । चेतने ।। निर्दिशतीति ।। भङ्ग्याहिकया दर्शयतीत्यर्थः । चेतना रमाव्यतिरिक्ताः । एके रामानुजाः ।।व्यष्टि समष्टिभेदेनेति ।। व्यष्टयो मुक्ताः । समष्टयः संसारिणः । अनन्तः शेषः । ।। अतवेति ।। श्रीश्रीपतिभ्यां अन्ये जीवाः दुःखस्पृष्टा इत्यत्र 'जीवा एवतु दुःखिनः' इत्याद्यागमानां प्रामाण्यमिति राघवेन्द्रीये । समष्टिजीवत्वेन परपरिकल्पितानामपि गरुडादीनां दुःखस्पृष्टत्व इत्यर्थः ।। आगमानामिति ।। ते चान्यत्र द्रष्टव्याः । ननु दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनमिति धाप्रत्ययेन चेतनस्य प्रकारद्वयवत्वमुक्तम् । दुःखस्पृष्टतदस्पृष्टयोः प्रकारत्वञ्च तदाश्रयप्रकारिरूपव्यक्तिबाहुल्यं विना

टी—अत एव तद्विभागमाह ।

**स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्था इति द्विधा ॥**

विमुक्ताः दुःखात् । दुःखसंस्थाः वर्तमानदुःखाः । चशब्दो दुःखसंस्था इत्यतःपरं योज्यः । अत्र प्राधान्यक्रमेणोद्देशः ।

दुःखसंस्थानां प्रभेदमाह ॥

**दुःखसंस्थाः मुक्तियोग्या अयोग्या इति च द्विधा ॥४॥**

अयोग्याः मुक्तेः । अयोग्या इत्यतःपरं चशब्दो ज्ञातव्यः । अत्रापि तदेवोद्देशक्रमे निमित्तम् ॥ ननु च प्राधान्याद्विमुक्तभेदः प्रथमं

---

न युक्तम् । प्रकारत्वस्य स्वाश्रयव्यक्तिभेदं विनानुपपत्तेः । तथा च दुःखास्पृष्टस्यापि भेदवत्वं प्राप्तमत आह ॥अत एवेति ॥ तदेवविवृणोति ।
॥ दुःखास्पृष्ट इति ॥

रा—अत्रापि तदेवेति॥ प्राधान्यमेवेत्यर्थः ॥दुःखसंस्थेष्वेवेति॥ नतु मुक्तेष्विति भावः । योग्यतायाः स्वभावत्वेन मुक्तेष्वपि मुक्तियोग्यतायाः सत्वान्मुक्तियोग्यभेदकथनस्येत्युक्तावविरोधः । यद्वा एवं विमुक्तियोग्या इत्येतदभिप्रायमिदम् ॥

श्री—अत एव तद्विभागमिति ॥ धाप्रत्ययेन दुःखस्पृष्टेष्ववान्तरभेदस्य ज्ञापितत्वादेव । तज्जिज्ञासायां तद्विभागमाहेत्यर्थः ।

---

का—निगडमुक्तवारणायाह । दुःखादिति । आत्यन्तिकदुःखनिवृत्तिलाभाय विशब्दः । आत्यन्तिकत्वञ्च दुःखप्रागभावानवच्छिन्नत्वम् । तथा च दुःखप्रागभावानवच्छिन्नदुःखाभावविशिष्टत्वं दुःखविमुक्तत्वमिति निष्कर्षः ।

वर्तमानदुःखाः ॥ वस्तुतस्तु एतत्कल्पे प्रागभावानधिकरणकालवृत्तिदुःखोपलक्षितत्वं वर्तमानदुःखत्वम् । सृज्यजीवसंग्रहायैतत्कल्पवृत्तित्वमुपेक्षितम् । तेषामेवतत्कल्पीयदुःखशून्यत्वेऽपि एतत्कल्पप्रागभावानधिकरणीभूतोत्तरकल्पीयदुःखवत्वात्सङ्ग्रहः । सुप्तानामपि दुःखोपलक्षितत्वान्नोक्तदोषः ।

विमुक्ताश्चेत्यत्र विमुक्तशब्देन रमाया अपि प्राप्तिं परिहर्तुमाह ॥विमुक्ताः दुःखादिति ॥ तथा च दुःखध्वंसवन्त इत्यर्थः। विमुक्तानामपि पूर्वं दुःखसंस्थत्वादाह ॥ वर्तमानदुःखा इति ॥ एते एव अनयोर्लक्षणे। एवमुत्तरत्रापि संज्ञानिरुक्त्यैव लक्षणं लभ्यत इति द्रष्टव्यम् ॥ योज्य- इति ॥ विमुक्तादुःखसंस्थाश्चेति योज्य इत्यर्थः ॥ प्राधान्यक्रमेणेति ॥ दुःखमुक्तदुःखसंस्थयोर्मध्ये दुःखमुक्तानां प्राधान्यादित्यर्थः। ननु पूर्वं दुःखसंस्थानां द्वैविध्यस्यानुक्तत्वेन इति च द्विधेति द्वैविध्यसमुच्चयः कथमित्यत आह ॥ अयोग्या इत्यतः परमिति ॥ अयोग्याश्चेतीत्यर्थः। तदेव प्राधान्यमेव। मुक्तियोग्यतदयोग्ययोर्मध्ये मुक्तियोग्यानां प्राधान्यात्त एवादौ निर्दिष्टा इत्यर्थः ॥ ननुचेति ॥ स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्थाश्चेति प्राधान्यक्रमेण विमुक्तानां प्रथममुद्दिष्टत्वात्तदनुसारेण विमुक्तानां प्रभेद एव आदौ वक्तव्यः। तमनुक्त्वा दुःखसंस्था मुक्तियोग्या इति अनन्तरोद्दिष्टदुःखसंस्थानामादौ विभागकथने किं निमित्तमित्यर्थः ॥ तदभिधानानन्तरमिति ॥ दुःखसंस्थानां योग्यायोग्यभेदकथनानन्तरमित्यर्थः। अयं भावः। यदि देवर्ष्यादिभेदेन पञ्चधा विमुक्त-

---

अयोग्यामुक्तेरिति ॥ अत्र मुक्तियोग्यत्वं मुक्तिप्रयोजकदृढभक्त्यादि रूपत्वम्। अतद्रूपत्वं तद्विरोधि द्वेषादिरूपं वा मुक्त्ययोग्यत्वमिति ध्येयम्।

गु—॥ दुःखसंस्था इति मूलम् ॥ दुःखे संस्था वर्तमाना इति भाति। तदनुपपन्नम्। जीवानामेवदुःखाधिकरणत्वेन दुःखस्य जीवाधिकरणत्वाभावादित्यतस्तद्याचष्टे ॥दुःखसंस्था इति॥ सम्यक् तिष्ठत इति संस्थं वर्तमानमिति यावत्। संस्थं दुःखं येषान्ते वाहिताग्न्यादिष्विति विशेषणपदत्वात्तेन दुःखसंस्था इति मूलस्य वर्तमानदुःखा इति व्याख्यानेन नोक्तानुपपत्तिरित्यभिप्रायः। न च सुषुप्त्यवस्थापन्नेऽव्याप्तिः। तत्रापि शरीरेन्द्रियादिरूपदुःखस्यवर्तमानत्वादित्याहुः। वर्तमानदुःखपदेन दुःखप्रागभाव एव विवक्षित इत्यदोष इत्यप्याहुः।

वक्तव्यः । सत्यम् । योग्यायोग्यभेदस्य दुःखसंस्थेष्वेव भावात्तदभिधानानन्तरं मुक्तियोग्यभेदकथनस्य सौकर्यात्क्रमोल्लंघनम् ।

इदानीं मुक्तानां प्रभेदमाह ॥

**देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा ॥**

पान्तीति पाः चक्रवर्तिनः । नराः मनुष्योत्तमाः । तुशब्दोऽवधारणे ।

---

भेदमादावभिधाय पश्चाद्दुःखसंस्थानां योग्यायोग्यप्रभेदमुक्त्वा मुक्तियोग्यानामपि पुनः देवर्ष्यादिभेदेन पञ्चविधत्वमुच्येत । तदोक्तिगौरवम् । यदि तु दुःखसंस्थानां योग्यायोग्यविभागकथनानन्तरं विमुक्तानां पञ्चविधत्वमुक्त्वा एवं विमुक्तियोग्याश्चेति मुक्तियोग्येषु तदतिदिश्यते तदा उक्तिलाघवमिति । ननु कथमेवमतिदेष्टुं शक्यम् । विमुक्तानां पञ्चविधत्वकथनानन्तरं विमुक्तानामपि दुःखसंस्थवत् योग्यायोग्यप्रभेदवत्वे मुक्ताः द्विविधाः योग्याः अयोग्याश्चेति तत्कथनस्यैवोचितत्वेन मुक्तानां पञ्चविधत्वकथनानन्तरं एवं विमुक्तियोग्यश्चेत्यतिदेशानवकाशात् । तथा च मुक्तानां पञ्चविधत्वकथनानन्तरं मुक्तानां योग्यायोग्यविभागमुक्त्वा अनन्तरमेवं विमुक्तियोग्याश्चेत्यतिदेशात् गौरवमेवेत्यत उक्तम् ॥ योग्यायोग्यभेदस्य दुःखसंस्थेष्वेव भावादिति ॥ तथा च मुक्तेषु दुःखसंस्थवत् योग्यायोग्यभेदस्याभावेन विमुक्तानां देवऋष्यादिभेदेन विभागकथनानन्तरमेवं विमुक्तियोग्याश्चेत्यतिदेशो युक्त एवेत्युक्तिलाघवमुपपन्नमितिभावः ।

रा—॥ पान्तीति पा इति ॥ पा रक्षणे पचाद्यच् आतो लोप इटिचेत्याकारलोपः ॥ केषाञ्चिदिति ॥ देवगन्धर्वाणां कर्मजाजानजदेवानाञ्चेत्यर्थः ॥ केषाञ्चिदिति ॥ मनुष्यगन्धर्वा(दीनामि)णामित्यर्थः ॥ ग्रन्थान्तरेति ॥ तैत्तिरीयादिग्रन्थान्तरेत्यर्थः ।

तेन ये मोक्षे तारतम्यं न मन्यन्ते तन्मतं निराचष्टे। गन्धर्वादीनां केषाञ्चिदेष्वेवान्तर्भावात्केषाञ्चिदविवक्षितत्वान्नग्रन्थान्तरविरोधः।

---

श्री—पितृपत्वं एकोपाधिरिति भ्रान्तिं निवारयितुमाह॥ पांतीति पा इति॥ तथा च पा पालन इति धातोः पाः पालकाश्चक्रवर्तिन इत्यर्थः॥ अवधारण इति॥ इत्येव नान्यथेत्यवधारण इत्यर्थः॥ तेनेति॥ मुक्ताः देवऋष्यादिभेदेन पञ्चधा तरतमभावेन स्थिता नान्यथेति वचनेनेत्यर्थः॥ ये॥ रामानुजाः। ननु गन्धर्वादीनामपि ग्रन्थान्तरे मुक्तेरुक्तत्वात् तेप्यत्र कुतो नोक्ताः। अतो विभागन्यूनतेत्यत आह॥ गन्धर्वादीनामिति॥ आदिपदेन अप्सरस्स्त्रीणामपि ग्रहणम्॥एष्वंतर्भावादिति॥ एषु=ऋषिपितृपादिषु 'गन्धर्वाद्यास्तदन्तरा' इति वचनादिति भावः॥केषाञ्चिदिति॥ असुरगन्धर्वासुराप्सरस्स्त्रीणामित्यर्थः। आसुरगन्धर्वा एव न संतीति वदतां श्रीमन्महाभारततात्पर्यनिर्णय-

---

का—तेनेति॥ यद्यपि पञ्चविधैवेत्यवधारणेन मुक्तानामेकजातीयत्वनिरास एव लभ्यते। तथापि तारतम्योपपादकत्वेनैव पञ्चविधत्वावधारणात्साम्यनिरासोऽपि सिध्यति। तथाहि 'ब्रह्मान्ता उत्तरोत्तरम्। मुक्ताशतगुणोद्रिक्ता' इति तत्त्वविवेकोक्तं मुक्तामुक्ततारतम्यमनुपपन्नम्। युवास्यादित्यादिमूलश्रुतौ मनुष्यत्वादिजातिविशिष्टानामेव तारतम्योक्तेः। मुक्तौ च तदपायादिति मतं न श्रद्धेयम्। मुक्तानामपि मनुष्यत्वादिजातिविशिष्टत्वे तारतम्योपपत्तेरिति। अत्र देवाद्यनन्तर्भूताशेषमुक्तानां मनुष्योत्तमेष्वन्तर्भावः। देवादिभिन्नसच्चेतनमात्रस्य मनुष्योत्तमपदेनविवक्षितत्वादित्यवधेयम्।

वें—निराचष्ट इति॥ यद्यपि देवर्षीत्यादिवाक्ये विभाग एव प्रतीयते स्फुटं, न तारतम्यं, तथापि-संसारदशायां तारतम्योपेते ब्रह्मादौ प्रसिद्धदेवर्ष्यादिसंज्ञयैवोद्देश्यतारतम्यमुक्तप्रायमिति भावः। ननु गन्धर्वाप्सरःप्रभृतीनामपि मुक्तप्रभेदत्वेन

"क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः।
आजानजाः कर्मजाश्च देव इन्द्रः पुरन्दरः॥"

विरोधः। यथोक्तं भगवत्पादैः। 'कोटित्रयं स निजघान तथासुराणां गन्धर्वजन्मभरतेन' इति।

इत्यादावुक्तत्वात्कथं पञ्चधेत्युक्तमित्यत आह—॥ गन्धर्वादीनामिति ॥ अत्र देवपदेन तात्त्विकानामिव कर्मजानामपि देवानां ग्रहणम्,

"तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि।
आजानदेवास्ते प्रोक्ताः" इत्युक्तेः

तुम्बुरुप्रमुखशतगन्धर्वाणां, उर्वश्याद्यप्सरसां चाजानदेवेष्वन्तर्भावात्। तुम्बुरुप्रमुखेभ्यः उत्तमगन्धर्वाणां चाष्टानां,

"कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम्।
आजानदेवाः' इत्युक्त्या मुक्तकर्मदेवेष्वन्तर्भावात्।

तदन्येषां देवगन्धर्वादीनां तारतम्योक्तिपरेऽस्मिन् विभागवाक्ये विवक्षाविरहात् न 'क्षितिपा' इत्यादिग्रन्थान्तरविरोध इत्यर्थः। नहि विभागवाक्यान्तरस्येव अस्य वाक्यस्य न्यूनाधिकसंख्यावान्तरव्यवच्छेदे तात्पर्यं किन्तु मुक्ता देवर्ष्यादिभेदेन तारतम्योपेता एवेत्यत्रैव। न चात्र ग्रन्थान्तरविरोधोऽस्तीति भावः। अत एव तत्त्वविवेके ह्यत्र "ब्रह्मान्ता उत्तरोत्तरमुक्ताः शतगुणाः प्रोक्ताः" इति तारतम्यमेवोक्तम्। इदमपि वाक्यं तेनेत्यादिना मोक्षे तारतम्याभावमतनिराकरणपरत्वेन व्याख्यातमिति बोध्यम्॥

का—तमोयोग्या इति॥ तमः प्रापकदृढद्वेषादिरूपा इत्यर्थः। नित्यसंसारिण इति॥ मध्यममनुष्याणां लिङ्गभङ्गानङ्गीकारे नित्यलिङ्गालिङ्गितत्वं नित्यसंसारित्वम्। तदङ्गीकारेतु सुखदुःखाभिव्यञ्जकभक्तिद्वेषादिरूपत्वमेवतत्। 'नित्यावर्तास्तु मध्यमाः' इत्यस्यापि नित्यं मिश्रफला इत्यर्थः। प्राप्ताप्राप्तफलकत्वेन तेषामविभागस्तु सर्वदा संसारसमानधर्मत्वाभिप्रायेणैवेति ज्ञेयम्। ॥ प्रकीर्तिता इत्यत्रागमसम्मतिमाचष्टे॥ सचागमः 'शृण्वे वीरमुग्रमुग्रं दमायन्नन्यमन्यमिति नेनीयमानः एधमानद्विडुभयस्य राजाचोष्कुयते विशइन्द्रो मनुष्या।'

'सात्त्विका राजसाश्चैव तामसास्त्रिविधा जनाः।
सात्त्विकास्तत्रदेवाद्याः राजसाः सृष्टिगास्तथा।

टी— दुःखसंस्थाः मुक्तियोग्यायोग्यभेदाद्द्विधा इत्युक्तम् । तत्रमुक्तप्रभेदं योग्येष्वतिदिशति ॥

## ॥ एवं विमुक्तियोग्याश्च ॥

देवर्ष्यादिभेदेन पञ्चधा इत्यस्य अनुकर्षणार्थश्चकारः ।

मुक्त्ययोग्यविभागमाह ॥

## तमोगाः स्रुतिसंस्थिताः ॥ ५ ॥ इति द्विधा मुक्त्ययोग्याः ॥

तमोगाः=तमोयोग्याः । न तु प्राप्ततमसः । वक्ष्यमाणविभागविरोधात् । स्रुतिसंस्थिताः=नित्यसंसारिणः । अयोग्यतातिशयानुसारेणोद्देशः । तमोयोग्यानां प्रभेदमाह ।

## दैत्यरक्षःपिशाचकाः । मर्त्याधमाश्चतुर्धैव तमोयोग्याः प्रकीर्तिताः ॥ ६ ॥

मर्त्याधमा इत्यतः परं इतिशब्दोऽध्याहार्यः । अप्रसिद्धत्वादस्य भेदस्याश्रद्धेयत्वं निवारयितुमेवशब्दः । प्रकीर्तिता इत्यत्रागमसंमतिमाचष्टे । सचान्यत्रोदाहृतो द्रष्टव्यः ।

---

रा—वक्ष्यमाणेति॥ दैत्येत्यादिवक्ष्यमाणेत्यर्थः ॥अयोग्यतेति॥ मुक्तितत्साधनादावयोग्यतातिशयेत्यर्थः ॥ स चान्यत्रोदाहृत इति ॥

मर्त्याधमास्तामसास्तु दैत्यरक्षःपिशाचकाः ।
स्वरूपभूतविद्वेषा अधो गच्छन्ति ते तमः ।'

इत्यादि भाष्यादावुदाहृत इत्यर्थः । वीरो=अध्यवसायान्तगामी परमेश्वरः सर्वानुग्रान्=दैत्यादीन्, दमयन्, तद्विरुद्धान्, देवादीन्, संसारमतिक्रम्य, स्वपदं नयन् वेदादिषु श्रूयते । स एव मुक्तामुक्तनियामको मध्यममनुष्यप्रजाः संसारे एवावर्तयति । नतु साधनानुष्ठानेऽपि मोचयति यतः स्वायोग्यप्रयत्नादेधमानान् द्वेष्टीति श्रुत्यर्थः । मर्त्याधमेभ्यो दैत्यादीनां कुत्सितार्थकप्रत्ययेन बहुतरायोग्यत्वं सूचितम् । अत एव तेषां पृथगुक्तिरिति ज्ञेयम् ।

टी—चतुर्धा अप्येते प्रत्येकं द्विधा इत्याह ।

**॥ ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा ॥**

तेच = चतुर्धा अपि सृतिसंस्थाः = संसारे वर्तमानाः नाधुनापि तमः प्राप्ताः । योग्यतायाः चैतन्यस्वभावत्वेन तमोयोग्यानामयं विभागो नानुपपन्नः ।

---

'प्रजा ह तिस्रो अत्यायमीयुः' इत्यैतरेयभाष्ये। तथा तृतीयस्कन्धे एकादश तात्पर्येच । 'जातातिकृष्णा तद्देहाद्दैत्यरक्षःपिशाचकाः' इत्युदाहृत इत्यर्थः।

श्री—मुक्तप्रभेदमिति॥ मुक्तानां देवर्ष्यादिप्रभेदं प्रकारमित्यर्थः तमोयोग्याःप्रकीर्तिता इति वक्ष्यमाणमूलानुसारेण तमोगा इत्यस्यार्थमाह ॥ तमोयोग्या इति ॥ ननु तमोगा इत्यस्य तमसि स्थिताः प्राप्ततमस इति यावत् इत्येवार्थः कस्मान्नस्यादित्यत आह ॥ नतु प्राप्ततमस इति ॥ कुत इत्यत आह ॥ वक्ष्यमाणेति ॥ दैत्यरक्षः पिशाचका इत्यादिना तमोयोग्यानां विभागस्य वक्ष्यमाणत्वेन तद्विरोधप्रसङ्गादित्यर्थः । सृतिसंस्थापेक्षया तमोयोग्यानामादावुद्देशे निमित्तमाह ॥ अयोग्यतातिशयेति॥ नित्यसंसार्यपेक्षया अयोग्यताप्रयुक्तदुःखातिशयानुसारेणेत्यर्थः। दैत्यादिषु प्रत्येकं चातुर्विध्यान्वयभ्रमं वारयितुमाह ॥ इति शब्दोऽध्याहार्य इति ॥ तथा च तमोयोग्याः दैत्यरक्षःपिशाचकाः । मर्त्याधमाश्चेति चतुर्धेत्युक्त्या दैत्यादीनां प्रत्येकं चतुर्विधत्वभ्रमो निरस्त इति ज्ञातव्यम् ॥ एव शब्द इति ॥ अवधारणेनाश्रद्धेयत्वं निवारितमिति ज्ञातव्यम् । अप्रसिद्धत्वपरिहाराय प्रकीर्तिता इत्युक्तम्। तदभिप्रायमाह ॥ प्रकीर्तिता इति ॥ अत्र तमोयोग्यानामेवं चातुर्विध्ये ।

रा—ननु योग्यविभागत्वं प्राप्ततमस्कानामयुक्तम्। फलप्राप्तौ योग्यतायाः विनाशादित्यत आह ॥ योग्यताया इति ।

टी—एवं चेतनविभागं विस्तरेणाभिधायावसरप्राप्तमचेतन-विभागमाह ॥

**नित्यानित्यविभागेन त्रिधैवाचेतनं मतम् ॥७॥**

अत्राप्यचेतनमेवैवंविभागवदित्यर्थानभ्युपगमात्पूर्वोक्ततत्वानामपि प्रमाणान्तरेण नित्यत्वादिग्रहणं न विरुद्धम् । नित्यानित्यविभागेने-त्यस्य नित्यानित्यत्वेन तद्विभागेनचेत्यर्थः । तथा च नित्यानित्यं नित्यं अनित्यश्चेत्यचेतनं त्रिविधमित्युक्तं भवति । केचित्सर्वं क्षणिकं मन्यमानाः नित्यं न मन्यन्ते । अपरेतु सत्कार्यवादिनोऽनित्यं नाङ्गीकुर्वन्ति । सर्वेऽपि नित्यानित्यं विरोधान्नाभ्युपगच्छन्ति । तन्नि-रासायैवकारः । न प्रतिज्ञामात्रेणार्थसिद्धिरिति प्रामाणिकत्वमुक्त-विभागस्य सूचयति मतमिति । तच्च लेशतो दर्शयिष्यामः ।

---

श्री—ननु सहकारिविरहप्रयुक्तकार्याभावरूपा योग्यता वनस्थे कोमलदण्डादौ दृष्टा । एतादृशी च योग्यता सृतिसंस्थेष्वेवास्ति । ननु प्राप्तान्धतमसेषु । तत्र सहकारिणामेवसत्त्वेन तद्विरहप्रयुक्तकार्याभावा-भावात् । अतः प्राप्तान्धतमसानां कथं तमोयोग्यप्रभेदरूपत्वमित्यत आह ॥ योग्यताया इति ॥ सिद्धान्ते योग्यताशक्तिश्च चैतन्यस्वरूपमेव । तथा च चैतन्यस्वरूपमेव योग्यता न पूर्वोक्ता । यथोक्तम् । 'स्वभावाख्या योग्यता या हठाख्या' इति । तथा च प्राप्तान्धतमसेष्वपि चैतन्यस्वरूपस्या-नपायेन योग्यताया अनपायात्प्राप्तान्धतमसानामपि तमोयोग्यस्वरूपत्वं नानुपपन्नमित्यर्थः ।

रा—॥ पूर्वोक्तेति ॥ चेतनानां नित्यत्वं अत्यन्ताभावध्वंसयोः नित्यत्वं प्रागभावस्य अनित्यत्वं अन्योन्याभावस्य च यथाधिकरणं नित्य-त्वं अनित्यत्वञ्चेत्यादिर्ध्येयमित्यर्थः ॥ सत्कार्येति ॥ कारणं सदेव कार्यं कुलालादिव्यापारेण व्यज्यते तत्रैव लीयत इति सत्कार्यवादिनो अनित्यं नेति मन्यन्त इत्यर्थः ॥ सर्वेपीति ॥ वादिन इत्यर्थः ॥दर्शयिष्याम इति॥ नित्यादिवस्तुनिर्देशप्रस्ताव इति भावः ।

टी—यद्यपि नित्यं नित्यानित्यं अनित्यमिति उद्देशः कार्यः प्राधान्यात् । तथाप्युक्तिलाघवाय क्रमोल्लङ्घनम् । क्रमेण त्रयं दर्शयिष्यन्नित्यं तावत् दर्शयति ।

---

श्री—अवसरप्राप्तमिति॥ चेतनाचेतनयोर्मध्ये चेतनस्याभ्यर्हितत्वेन तन्निरूपणानन्तरं प्राप्तमित्यर्थः । नन्वेवंसति स्वतन्त्रतत्वस्य विष्णोर्नित्यत्वं नोक्तं स्यात् । तस्यास्वतन्त्रप्रभेदरूपत्वात् । परतन्त्रतत्त्वेऽपि चेतनानां नित्यत्वं नोक्तं स्यात् । तस्याचेतनप्रभेदरूपत्वात् । तथा ध्वंसात्यन्ताभावयोर्नित्यत्वं प्रागभावस्यानित्यत्वमपि नोक्तं स्यात् । तस्य भावप्रभेदरूपाचेतनप्रभेदरूपत्वादित्यत आह ॥ अत्रापीति ॥ एवमचेतनं नित्यादिभेदेन त्रिविधमेव न पुनरेकविधं नापि चतुर्विधमित्येवार्थोऽभिमतः न पुनरचेतनमेव नित्यादिविभागवदिति । तथा च पूर्वोक्तानां विष्णवादितत्वानां नित्यत्वादिकं न विरुद्धमित्यर्थः । ननु नित्यानित्यविभागेनेत्यादिना विधाद्वयस्यैव लाभात् त्रिधेति कथमुक्तमित्यत आह ॥ नित्यानित्यविभागेनेत्यस्येति ॥ तद्विभागेनेति ॥ नित्यानित्यस्य विभागेन पार्थक्यकरणेन । तथा च नित्यत्वेनानित्यत्वेनचेत्यर्थः । तथा च नित्यानित्यश्च विभागश्च नित्यानित्यविभागमिति द्वंद्वैकवद्भावमित्युक्तं भवति ॥ मन्यमानाः बौद्धाः । अपरे साङ्ख्याः ॥ सत्कार्यवादिन इति ॥ मृदादौ पृथुबुध्नोदराकारादिना अत्यन्तसदेव घटादिकार्यं जायते तर्हि दण्डादिकारकचक्रवैयर्थ्यमिति शङ्कायामभिव्यक्त्यर्थत्वान्नवैयर्थ्यमित्यङ्गीकुर्वन्तः साङ्ख्याः अनित्यं न स्वीकुर्वन्तीत्यर्थः ॥ लेशत इति ॥ तच्च वेदानां नित्यावेदा इत्येतद्व्याख्यानसमये नित्यादिवस्तुनिर्देशप्रस्तावे दर्शयिष्याम इति भावः ।

रा—क्रमेति ॥ नित्यानित्यं नित्यं अनित्यश्चेत्येवं क्रमोल्लंघन-

---

का—केचित्विति॥ चार्वाकादय इत्यर्थः । क्षणिकत्वञ्चैकक्षणमात्रवृत्तित्वम् । स्वाधिकरणक्षणोत्तरक्षणावृत्तित्वमिति यावत् । स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वम् । अपरे-सांख्याः सत्कार्य-

## ॥ नित्या वेदाः ॥

अत्र नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वम् । तच्च वेदानां 'नित्यावेदाः समस्ताश्च' इत्यादि प्रमाणसिद्धम् । अत्र वेदा इत्युपलक्षणम् । पञ्चाशद्वर्णानां अव्याकृताकाशस्य च तथा भावात् ।

---

मित्यर्थः ॥ कूटस्थतया आद्यन्तशून्यत्वमिति ॥ कूटवदाकाशवन्निर्विकारतया स्थिततयेत्यर्थः । यद्यप्यानुपूर्व्याः कृत्रिमत्वेन सजातीयानुपूर्वीकत्वमात्रेण प्रवाहतो अनादित्वमेव न कूटस्थत्वम् । तथैव तत्वनिर्णयटीकोक्तेः । तथापि अध्यापकाद्युच्चरितवेदस्य तथात्वेऽपि ईश्वरबुद्धिस्थक्रमापेक्षयैतदुक्तिः । उक्तं हि तत्वनिर्णये । 'सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात्' इति । तथा तत्वनिर्णयोक्तप्रमाणशेषे 'नित्या वेदाःसमस्ताश्च शाश्वता विष्णुबुद्धिगाः' इति विष्णुबुद्धिगतत्वमुक्तम् ।

श्री—प्राधान्यादिति ॥ नित्यानित्याद्यपेक्षया नित्यस्य प्रधानत्वादित्यर्थः ॥ उक्तिलाघवायेति ॥ नित्यं नित्यानित्यं अनित्यमित्युद्देशे उक्तिगौरवम् । नित्यानित्यविभागेनेत्युक्तौ तु लाघवम् । तदर्थं क्रमोल्लङ्घनमित्यर्थः । नित्यस्य लक्षणमाह ॥ अत्र नित्यत्वं नामेति ॥ नित्यानित्ये अतिव्याप्तिपरिहारायाह ॥ कूटस्थतयेति ॥ कूटमव्याकृताकाशः ।

---

वादिन इति । सदेव कार्यं तत्तत्कालेऽभिव्यज्यत इति वादिन इत्यर्थः ।

वि—नित्यत्वं = क्रमाद्यन्तशून्यत्वं, अत्र हेतुः-कूटस्थतयेति । अपरिणामितयेत्यर्थः ।

वें—उक्तिलाघवायेति ॥ नित्यानित्यस्य प्रथमोद्देशे हि विभागपदेन तद्विभागभूतयोः नित्यानित्ययोर्ग्रहणसम्भवादुक्तिलाघवं भवति । अन्यथाहि–नित्यानित्य–नित्यानित्यत्वेनेत्यादिरूपेण विभागोक्तिप्रसङ्गेन गौरवं स्यादिति भावः । नित्यत्वं नित्यानित्यव्यावृत्तं यथा भवति तथा व्याचष्टे ॥ अत्र नित्यत्वं नामेति ॥

म—अत्रेति ॥ अस्मिन्वाक्ये वेदानामुक्तं नित्यत्वं नाम कूटस्थतया=निर्विकारतया। आद्यन्तशून्यत्वं=उत्पत्तिनाशरहितत्वम्। कूटवत्तिष्ठतीति कूटस्थम्। कूटं खं विदलं व्योमेत्याद्यभिधानादाकाशवाचि कूटशब्द उपपदे तिष्ठतेः "सुपिस्थ" इत्यतो योगविभागात्कप्रत्यये रूपम्। आकाशवत्स्थित्युक्त्या निर्विकारत्वं लभ्यते। ध्वंसप्रागभावयोरनतिव्याप्तये आद्यन्तशून्यत्वमिति क्रमाद्विशेषणे। तावत्युक्ते कालप्रवाहे प्रकृत्याश्चातिप्रसक्तिः। तत्परिहाराय कूटस्थतयेतिपदम्। एवञ्च कालप्रवाहप्रकृत्योः क्षणलवाद्यंशैः महदाद्यात्मना विकारदर्शनात्सदैकप्रकारत्वरूपकूटस्थत्वाभावान्नदोषः ॥अत्रेति॥ अजहत्स्वार्थलक्षणारूपमित्यर्थः। ततश्चनानुक्तिदोषः। भूतव्यावृत्तये अव्याकृतपदम्। न च "नहि वयं वेदस्य कूटस्थनित्यतां ब्रूमः। किन्तु शब्दतोऽर्थतश्चैकप्रकारतामेव" इति तत्वनिर्णयटीकाविरोध इति वाच्यम्। क्रमस्तु द्विविधः। ईशबुद्धिस्थोऽस्मद्बुद्धिस्थश्चेति। तत्राद्यमवलम्ब्येयं टीकाप्रवृत्ता। ईश्वरबुद्धेरुपरमाभावेन तदुपहितक्रमस्यापि नित्यत्वेनोक्तलक्षणसंभवात्। द्वितीयमवलम्ब्य तु तत्वनिर्णयटीकाप्रवृत्ता। अस्मद्बुद्धीनां क्रमवत्त्वात्तदुपहितक्रमविशिष्टवर्णात्मकवेदस्यापि तथोक्तिसंभवात्। एवमेव नित्यत्वावेदकप्रमाणान्यप्युभयथा योज्यानीत्यविरोधसंभवात्। वयं तु ब्रूमः न क्रमस्यानादिनित्यत्वमङ्गीकारार्हम्। तथासति वर्णधर्मस्य क्रमस्य यावद्द्रव्यभावित्वेन वर्णयोरत्यन्ताभेदप्रसङ्गेन वर्णानां परस्परमत्यन्ताभेदप्रसङ्गात्। अत एव चन्द्रिकायामिमामेवानुपपत्तिं मनसि निधाय "कृत्वाचिन्तयावानादित्वोक्तिः' इत्युक्तम्। ततश्च कृतकक्रमविशिष्टवर्णात्मकस्य वेदस्य नित्यत्वासम्भवात् कथं तन्नित्यत्वोक्तिः। कथं वा कृतकस्य कूटस्थतया प्रमितत्वम्। नित्यानित्यादिभावेन निर्दिष्टस्य नित्यत्वेन निर्देश इत्यत आह ॥ अत वेदा इत्युपलक्षणमिति॥ अत्रोपलक्षणपदेन लक्षणासामान्यमित्युच्यते। नत्वजहत्स्वार्थलक्षणा। 'उपलक्षणा च गौणी च तिस्रःशब्दस्य वृत्तयः' इत्यादौ लक्षणासामान्येऽपि तत्प्रयोगदर्शनात्। तथा च वर्णानामव्याकृतस्यैव कूटस्थनित्यत्वेनाभिप्रेतत्वान्नसंग्रह्यासंग्रहो असंग्राह्य संग्रहोऽपीति भावः।

का—ननु वेदानामेव नित्यत्वोक्तिरयुक्ता। प्रकृत्यादीनामपि नित्यत्वादित्यतस्तद्व्यावृत्तनित्यत्वं निर्वक्ति ॥ अत्रेति ॥ अस्मिन् ग्रन्थे

विवक्षितमिति शेषः। तेन तत्त्वविवेकादौ प्रकृत्यादौ नित्यत्वोक्तावपि न विरोधः तत्रान्यविधनित्यत्वस्य विवक्षितत्वादिति सूचितम्। अत्र नित्यत्वं नाम आद्यन्तशून्यत्वं तत्र हेतुः कूटस्थतयेति। अपरिणामित-येत्यर्थ इति प्राञ्चः। आद्यन्तशून्यत्वस्य प्रकृत्यादावतिव्याप्तिरित्यतः तद्व्याख्यानं कूटस्थतयेति। निर्विकारत्वरूपमित्यर्थ इति केचित्। उक्तातिव्याप्तिवारणाय कूटस्थत्वेसतीति विशेषणान्तरोपादानमित्यन्ये। तेषामयमाशयः। आद्यमते तावदाद्यन्तशून्यत्वं आद्यन्तवद्त्यन्तभिन्नत्वं तच्च नाद्यन्तवद्विकाराभिन्नप्रकृत्यादावतिव्याप्तमतो न कूटस्थत्वं लक्षण-घटकमिति। द्वितीयमते यथाश्रुतस्याद्यन्ताभाववत्त्वस्य प्रकृत्यादिसाधा-रणत्वात् कूटस्थत्वं विवक्षितं तच्च विकारसामान्यशून्यत्वं ध्वंसप्रागभा-वादेरपि जन्मादिविकारवत्त्वेनैव व्यावृत्तेर्नाद्यन्तशून्यत्वं पृथगुपादेय-मिति। तृतीयमतेचापरिणामित्वरूपकूटस्थत्वस्यैव विवक्षितत्वात् ध्वंसा-व्यावर्तकत्वेनाद्यन्ताभावत्वसार्थक्यमिति। अथमतत्रयेप्यसम्भवः। नित्यानामपि द्वित्वादिगुणात्मना परिणामित्वात्। तेन भेदाभेदाङ्गी-काराच्चेति चेदत्राहुः। कूटस्थत्वंनाम द्रव्यरूपेणापरिणामित्वं द्रव्याना-रम्भकत्वमितियावत्। नित्यानाञ्च द्रव्यानारम्भकत्वान्नोक्तदोषः। न च नित्यानामप्येतद्देशकालादिविशिष्टरूपद्रव्यारम्भकत्वमस्तीति शङ्क्यम्। विशिष्टस्याद्रव्यत्वादिति। एतच्च तृतीयमत एव संगच्छते न पूर्वमतयोः। आद्यन्तवद्द्रव्यभिन्नत्वस्य द्रव्यविकारवैधुर्यस्य वा विवक्षायां प्रागभा-वादावतिव्याप्तितादवस्थ्यात्। तस्मादाद्ये स्वनिष्ठगुणादिभिन्नत्वेनाद्यन्त-वद्विशेषणीयम्। द्वितीयेच विकारः तेन वेदादेः संग्रहः। प्रागभावादे-र्व्यावृत्तिश्चेति। केचित्तु वेदनित्यत्वप्रतिपादकानां ईश्वरबुद्धिघटितक्रम-विशिष्टपरत्वात् तदनित्यत्वप्रतिपादकानामस्मदादिबुद्धिघटितक्रमविशि-ष्टपरत्वान्न विरोध इत्याचक्षते।

अपरेतु नवेदद्वैविध्यं युक्तं प्रमाणाभावात्। तथात्वेचास्मदादि-पठ्यमानस्याज्ञप्रणीतत्वेनाप्रामाण्यप्रसङ्गात्। अभ्युदयसाधनत्वाभाव-प्रसङ्गाच्च। ऋग्वेदएवाग्नेरजायतेत्यादेरभिव्यक्त्यर्थतया व्याख्यानवैय-र्थ्याच्च। वेदस्य बुद्धिघटितत्वासंभवाच्च। अन्यथा बुद्धेरश्रावणत्वेन वेदस्याश्रावणत्वप्रसङ्गात्। तस्मात्सांकल्पिकक्रमविशिष्टवर्णानामेववेद-त्वम्। यथाहि यजमानसंकल्पाद्विप्राणां पूजादौ क्रमस्तथा नित्यानामपि तदुपपत्तेः। न च संकल्पस्याश्रावणत्वेन वेदस्याश्रावणत्वप्रसङ्गः। संकल्पा-

'कूटंखं विदलं व्योम संधिराकाश उच्यते' इत्यभिधानात्। तद्वत् स्थितं कूटस्थम्। तत्सादृश्यं निर्विकारत्वेन विवक्षितम्। तथा च कूटस्थतयेत्यस्य निर्विकारतयेत्यर्थो द्रष्टव्यः। सहितमिति शेषः। तथा च कूटस्थत्वेसति आद्यन्तशून्यत्वं लक्षणम्। अन्त्यावयविन्यतिव्याप्तिपरिहारायोत्तरभागः। अव्यक्ते अतिव्याप्तिवारणाय विशेषणभागः। 'विकारोऽव्यक्तजन्महि' इति वचनेन तस्य विकारावगमादिति द्रष्टव्यम्। अन्येतु आद्यन्तशून्यत्वे कूटस्थत्वं हेतुतयैवोपात्तम्। न तु लक्षणान्तर्गतमित्यप्याहुः। ननु तत्तद्बुध्युपाधिकक्रमविशिष्टवर्णानां वेदत्वात् तेषाञ्च जन्मवत्वात् कथं नित्यत्वेन निर्देश इत्यत आह ॥ अत्र वेदा इति ॥ तथा भावादिति ॥ कूटस्थतया आद्यन्तशून्यत्वादित्यर्थः। तथाच जहल्लक्षणया पञ्चाशद्वर्णाः अव्याकृताकाशश्च वेदपदेन गृह्यन्त इति भावः। ननु पञ्चाशद्वर्णानामिति कथम्। अकाराद्याः षोडशस्वराः। काद्योमावसानाः स्पर्शाः पञ्चविंशतिः। यादि क्षान्ता दश इत्येकपञ्चाशद्वर्णाः। अत एवोक्तम्। 'एकपञ्चाशद्वर्णानां चतुर्विंशतिमूर्तयः' इति

---

धीनः संकल्पाघटितो वर्णधर्मः क्रमोऽस्तीत्यङ्गीकारात्। एवञ्चेश्वरसंकल्पाधीनस्य वैदिकवर्णक्रमस्य नित्यत्वात् वेदस्य नित्यत्वं सिद्धम्। इति वदन्ति।

एतेन वेदस्य कूटस्थत्वाङ्गीकारे नहि वयमित्यादितत्वनिर्णयटीकाविरोधः, न चासावभ्युपगमवादः। नित्या वेदा इति प्रमाणोक्तनित्यत्वव्याख्यानप्रसङ्गात्। 'अखिलैरप्येकप्रकारेणैव पठ्यन्ते एतदेवानादिनित्यत्वम्' इति टीकाविरोधाच्च। अत आकाशगुणैःशब्दैर्व्यज्यमानवर्णादयः तत्क्रमात्मकोवेदश्च नित्य एवेति मूले वेदनित्यत्वस्य पृथग्विधत्वात् पृथगुपसंहार इति टीकाविरोधाच्च। 'नहिवयं वेदस्य कूटस्थनित्यत्वं ब्रूमः' इति सुधाविरोधाच्चेत्यादिकमपास्तम्। तत्र साक्षात्कूटस्थत्वस्य निषिद्धत्वात् अत्र पुनः वर्णरूपेण कूटस्थत्वस्याभिप्रेतत्वेन विरोधाभावात्। इत्थञ्च नित्या वेदा इति मूले, तच्च वेदानामिति टीकायां, श्रुतिर्वेद इति तत्वविवेकटीकायाञ्च वेदग्रहणं संगच्छते। अचेतनत्रैविध्यञ्चोपपद्यते। अन्यथा वेदस्य नित्यानन्तर्भावे तच्चातुर्विध्यप्रसङ्गादित्यन्यत्रविस्तरः।

टी—नित्यानित्यं विभागेनाह ॥

॥ पुराणाद्याः कालः प्रकृतिरेव च ॥

॥ नित्यानित्यं त्रिधाप्रोक्तम् ॥

पुराणाद्याः पौरुषेयग्रन्थाः एका विधा। कालोऽपरा। प्रकृतिरन्या। ननु च त्रिधेति प्रकारत्रैविध्यमुक्तम्। नचात्र कश्चित् प्रकारो दर्शितः। किन्तु वस्तुनिर्देश एवकृतः। नैष दोषः। यन्न सर्वथा कूटस्थं नाप्य-

---

चेत् सत्यम्। कषयोर्योगे क्ष इति जातत्वेन तस्य पृथक् वर्णत्वाभाव-मभिप्रेत्य पञ्चाशद्वर्णानामित्युक्तत्वात्। एतदभिप्रायेणैवोक्तम्। तत्र 'वर्णाभिमानिभिरजेशमुखैः सहैव पञ्चाशता प्रतिगिरन्तमशेषविद्याः' इति। ननु वेदशब्देन पञ्चाशद्वर्णादयः जहत्स्वार्थलक्षणया गृह्यन्ते नहि जहत्स्वर्थलक्षणायाञ्चोपलक्षणप्रयोगोदृष्टः। गङ्गापदेन तीरं लक्ष्यत इत्ये-वार्थः नतूपलक्ष्यत इति। उपलक्षणशब्दप्रयोगश्च अजहत्स्वार्थलक्षणाया-मेव काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदं दध्युपघातकद्रव्यस्योप-लक्षकमिति व्यवहारादिति चेत् सत्यम्। जहत्स्वार्थलक्षणायामपि उपलक्षणशब्दप्रयोगस्य ग्रन्थेषु बहुलमुपलम्भात्। तथाहि। नन्वेवं सति नित्या वेदा इत्युदाहृतप्रमाणासङ्गतिः। नहि वर्णानां कूटस्थ-घटितनित्यत्वमुक्तम्। अपि तु वेदानां सर्वदैकप्रकारत्वरूपमेव नित्य-त्वम्। 'नहि वयं वेदस्य कूटस्थनित्यतां ब्रूमः। किन्तु शब्दतो अर्थतश्च सर्वदा एकप्रकारतामेव' इति तत्वनिर्णयटीकायां व्याख्यातत्वादिति चेत्। उच्यते। तत्रैव 'नच वर्णपदादीनामनित्यत्वं वक्तुं युक्तं' इति वाक्यव्याख्यानावसरे न केवलं वर्णमात्रं नापि पदादिमात्रं किन्तु यथा-योगं शाश्वता इत्यस्य वाक्यस्य प्रकारान्तरेण व्याख्यातत्वेन वर्णानां कूटस्थत्वस्याप्येतत्प्रमाणार्थत्वेन विवक्षितत्वात्। नह्येतद्व्याख्यानमभि-प्रेत्य अत्र नित्यावेदा इति प्रमाणोदाहरणे काप्यसङ्गतिरिति।

रा—अपरेत्यादौ विधेत्यनुषङ्गः ॥ अनित्यमेवेति ॥ घटादि-

नित्यमेव तदुच्यते नित्यानित्यम् । तस्य तिस्रोविधाःसंभवन्ति । उत्पत्तिमत्वे सति विनाशाभावः । एकदेशे उत्पत्तिविनाशौ एकदेशिन-स्तदभावः । स्वरूपेणोत्पत्त्याद्यभावेऽपि अवस्थागमापायवत्वञ्चेति । तदेतद्विधात्रयमुक्तवस्तुत्रयेऽस्तीति तस्यैव ग्रहणं कृतम् ।

---

वदिति भावः ॥ विनाशाभाव इति ॥ पुराणादिपौरुषेयग्रन्थस्य पुरुषै-रुत्पद्यमानक्रमवत्वेऽपि तस्य क्रमस्येश्वरबुद्धौ वेदक्रमस्येवोत्तरावधि-शून्यतया प्रतीयमानत्वेन विनाशाभाव इत्यर्थः । क्षणलवाद्येकदेशैरुत्पत्ति-विनाशवत्त्वेप्येकदेशवतोंऽशिनः कालस्य प्रवाहत आद्यन्तशून्यत्वेनो-त्पत्तिविनाशयोरभाव इत्यर्थः । जडोपादानप्रकृतेश्च स्वरूपत उत्पत्ति-विनाशयोरभावेऽपि महदाद्यात्मकत्वावस्थाविशेषेण तौ स्त इति । तदेत-द्विधात्रयमुक्तवस्तुत्रयेऽस्तीत्युक्तम् ॥ तस्यैवेति ॥ वस्तुत्रयस्यैवेत्यर्थः ।

श्री—वस्तुनिर्देश एवेति ॥ प्रकाराश्रयभूतपुराणादिरुपवस्तु-निर्देशएव कृत इत्यर्थः । उक्तदोषपरिजिहीर्षया नित्यानित्यसामान्यलक्षणं तावदाह ॥ यन्न सर्वथेत्यादिना ॥ केवलं नित्यभिन्नत्वे सति केवला-नित्यभिन्नमित्यर्थः । अत्र नित्येऽतिव्याप्तिवारणाय सत्यन्तम् । अनित्येऽ-तिव्याप्तिवारणायोत्तरभागः । उभयकेवलपदाभावे असम्भव इति सर्वं सार्थकम् ॥ तस्येति ॥ एतल्लक्षणाक्रान्तस्य नित्यानित्यस्येत्यर्थः । विधाः प्रकाराः । विधात्रयं प्रकारत्रयम् ॥ उक्तवस्तुत्रयेऽस्तीति ॥ यन्न सर्वथे-त्यादि सामान्यलक्षणाक्रान्ते पुराणादिरूपे वस्तुत्रय इत्यर्थः । तत्राद्यः प्रकारः पुराणे । उत्पत्तिमत्वेऽपि विनाशाभावात् । 'पुराणानामपि अन्यथा शब्दरचनमेवानित्यत्वम्' इत्युक्तेः । द्वितीयः प्रकारः काले । क्षणलवाद्येकदेशानामुत्पत्तिमत्वेऽपि एकदेशिनः प्रवाहस्य तदभावात् । 'कालप्रवाह एवैको नित्यो नतु विशेषवान्' इत्युक्तेः । तृतीयः प्रकारः प्रकृतौ स्पष्टः ।

---

वि—विशेषविभज्यतावच्छेदकप्रदर्शनार्थमेव सामान्यविभज्य-तावच्छेदकं तावद्दर्शयति यन्न सर्वथेति ॥ सर्वथा उभयान्तरहितभिन्न-त्वेसति सर्वथोभयान्तं वा भिन्नत्वमित्यर्थः ।

वे—नित्यानित्यं यथा नित्यानित्याभ्यां व्यावर्तते तथा व्याचष्टे यन्न सर्वथेति ।। अत्र कूटस्थत्वमवधिविधुरत्वम्, अवधिश्च द्विविधः। पूर्वः उत्तरश्चेति । द्विविधोऽपि स्वरूपेण स्वाभिन्नांशेन चेत्यनेकविधः । तथा च स्वरूपेण स्वाभिन्नांशादेश्च पूर्वोत्तरेणचावधिना विधुरं यत् नित्यतया विवक्षितं तद्वत् यन्न भवति; स्वरूपेणावधिद्वयोपेतं यदनित्यत्वेन विवक्षितं, तद्वच्चयन्न भवति; तन्नित्यानित्यमुच्यत इत्यर्थः ।

का—पौरुषेयग्रन्था इति। स्वतन्त्रवक्तृका इत्यर्थः । अन्यतात्पर्यानुपजीवितात्पर्यप्रयोज्या इति यावत्। तथाहि। येन पुरुषेण पूर्वतात्पर्यमनुपजीव्य स्वयमेव तात्पर्येण यद्वाक्यं प्रयुज्यते तदर्थकतद्वाक्यं तदीयमित्युच्यते । वेदस्यतु पूर्वतात्पर्यमनुसृत्यैव प्रयोगान्न पौरुषेयत्वमित्यवधेयम्।

स—उत्पत्तीत्यादिना।। इयञ्च विधा पुराणादेरर्थत एकप्रकारत्वाच्छब्दतोव्यत्यस्तेश्च संभवति। यथोक्तं "पुराणानि तदर्थानि सर्गेसर्गेऽन्यथैवतु" इति तत्वनिर्णयवाक्यव्याख्यानावसरे टीकायां "पौरुषेयत्वनिमित्त एवानित्यत्वव्यपदेशो न तु विनाशनिमित्त इत्यर्थः । अत एव त्वनित्यानीतिसंबन्धः" इत्यादिना। नन्वेवञ्चेत्पुराणानां नाशो नास्तीत्यागतमितिचेत् को नेत्याह । यथा वेदस्येशबुद्धिगतत्वं निमित्तीकृत्य नित्यत्वमुच्यते तथा पुराणेऽपि सुवचत्वात्। अत एव मुक्तैरपि पठ्यते। श्रूयते हि "ब्रह्मा त्वो वदति जातविद्याम्" इत्यादि । जातविद्यां पुराणम्। त्वः कश्चिद्ब्रह्मा वदतीति तदर्थः। ननु न पुराणस्योत्पत्तिरङ्गीकारार्हा। ईश्वरस्य सर्वज्ञत्वेनैष्यत्पुराणस्यापि तद्बुद्धिगतत्वादितिचेन्न। ईश्वरेण सदावर्तमानतयानुभूयमानत्वस्यानादित्वप्रयोजकत्वेन तत्करणात्पूर्वं तेषां वर्तमानतयानुभवाभावात् । किमत्रप्रमाणमितिचेत् पुराणजनिवाक्यान्यथानुपपत्तिरेवेति ब्रूमः । ननूत्पन्नपुराणानां नाशाभावे कल्पान्तरे पुनारचनं कुत इति शङ्का तु "प्रमाणप्रश्नश्चेदुक्तादेव पुराणवाक्यादिति ब्रूमः। प्रयोजनप्रश्नस्त्वयुक्तः। ईश्वरप्रवृत्तेः सर्वत्रप्रयोजनशून्यत्वात् । परप्रयोजनानितु सूक्ष्माण्युत्प्रेक्षितुं नप्रभवामः। भगवानाचार्योपीदानीं प्रयोजनाभावान्नावादीत्" इति तत्वनिर्णयटीकातो वारणीया। नन्वेकस्मिन्ब्रह्मकल्पे षट्त्रिंशत्सहस्रदिनानि भवंति। एवञ्च तेषु जातानां पुराणानामेकार्थत्वेऽपि पूर्वदिनपुराणेनैव तदर्थस्यज्ञातत्वादुत्तरेषां

निरधिकारिकत्वंस्यात् । अर्थीसमर्थो विद्वान्हितत्राधिक्रियते । ज्ञाते अर्थिताभावादितिचेत् सत्यं । तथापि संभवति देवानां तत्राधिकारः । पुराणस्य पूर्वपूर्वापेक्षयोत्तरोत्तरेषामर्थाधिक्यस्य विद्यमानत्वात्। न चैवं समानार्थताभावः। शतेपञ्चाशन्न्यायेन पूर्वपूर्वपुराणार्थानामुत्तरोत्तरेषु सत्वात्तदर्थापेक्षया तद्व्यवहारस्योपपन्नत्वात्। न चानन्तब्रह्मकल्पीय-पुराणानां समानार्थत्वे तदानन्त्यं नोपपद्यते। एकैकार्थप्रतिपादकपदानां मितत्वेन जन्माद्यस्य यतः सृष्ट्याद्यस्य यतः सर्गाद्यस्य यतः जन्मप्रभृति यस्मादित्यादिपदसमूहपरिवर्तनेनापि भेदकानां मितत्वात् ग्रन्थानन्त्या-नुपपत्तेरिति वाच्यम्। ईशाचिन्त्याद्भुतशक्त्यैवोपपन्नत्वात् । विस्तरस्तु सत्तत्वरत्नमालादितोऽनुसंधेयः। ननु कालावयवानामुत्पत्तिविनाशवत्वे तदुपादानं वाच्यम्। न च स्वयमेव स्वंप्रत्युपादानं भवति। विरोधात् । न च सर्वोपदानप्रकृतेस्तदेकदेशकालोपादानत्वमक्षुण्णमेवेतिवाच्यम् । विकल्पासहत्वात् । सर्वजन्योपादानं या प्रकृतिः सैव कालोपादानं उतान्या। न प्रथमः। क्षणलवादिकालावयवानां सर्वव्याप्तत्वेन विशिष्ट-प्रकृतेरपि काल एवोपक्षीणत्वात् पृथग्जगदुपादानाभावेन निरूपादानक-सृष्टेरभावात् तदभावापत्तेः। नद्वितीयः। असंमतेरितिचेदुच्यते। युगप-देव यावद्देशव्याप्तलवादिकालोपादानत्वं जगदुपादानत्वञ्चेशशक्त्या प्रकृतेर्घटते। यथोक्तं सुधायां वैशेषिकपरीक्षावसरे "अनित्यत्वे कारणं वाच्यमितिचेत्सत्यं। उपादानंतु प्रकृतिरेव" इति। अस्माकंत्वीशशक्त्यै-वोपपद्यत इति। ननु मूले कथं प्रकृतिरित्येकवचनं गुणत्रयात्मिकाया-स्तस्या अनन्तत्वादिति चेत्। उच्यते। एकैव प्रकृतिः। अजामेकामिति श्रुतेः। तदप्येकत्वं नाव्याकृताकाशस्येव। अयःपिण्डादिवत्। यथा वालुकापिण्डस्य वालुकानां संश्लेषविशेषवत्वेनैक एवायं वालुकापिण्ड इति समुदायवैलक्षण्येन प्रत्यक्षादिसिद्धैकत्वाधिकरणत्वेऽपि स्थूल-सूक्ष्मादितयावस्थितवालुकानां भेदः प्रतीयते। एवमन्तर्भेदघटितमेव। अतएव शास्त्रे कचित्प्रकृतय इति बहुवचनं, कचित्प्रकृतिरित्येकवचनञ्च सङ्गच्छते। एवमेकैव प्रकृतिः सर्वत्रव्याप्ता । 'महान्तं च समावृत्य प्रधानं समवस्थितं। अनन्तस्य न तस्यान्तः संख्यानं वापि विद्यत' इत्युक्तेः। महदादितत्वविनाशे तत्तत्सूक्ष्माण्यव्यक्ततामापद्यन्ते। गुण-त्रयांशभूतमहदाद्युपादानभूतभागविशेषास्तु गुणत्रये विशन्ति। गुण-त्रयेऽपि यद्रजः तृतीयतात्पर्योक्तदिशा सत्वे तमसि च मिश्रीभवति।

टी—नन्वेवं सत्यवान्तरभेदैर्विधान्तरमप्युत्प्रेक्षितुं शक्यमित्यत एवेत्युक्तम्। तत्रोपपादकाकांक्षायां प्रोक्तमित्याह। शास्त्रीयविधानामत्रैवान्तर्भावोऽन्यासामनादरणीयत्वञ्चेति। अथवा 'पुराणानि तदर्थानि, सर्वे निमेषा जज्ञिरे, विकारोऽव्यक्तजन्महि' इत्याद्यागमपरिग्रहार्थं प्रोक्तमित्युक्तम्। अत एव विरोधोऽपि परिहृतः॥

रा—अवान्तरभेदैरिति॥ वर्णात्मना विकारित्वेऽपि क्रमरूपेण तथात्वेनाविकारिविकाररूपैकविधा। अंशैराशुविनाशादिमत्वेऽप्यंशिनस्तदभावइत्याशुविनाशादितदभावादिरूपांशांशिरूपावा अपरा विधा। कारणात्मना सत्वेऽपि कार्यात्मना असत्वेन सदसत्कारणकार्यरूपा अन्याविधेत्यादिरूपेण नित्यानित्यविधातो विधान्तरमित्यर्थः। पुराणानामुत्पत्तिमत्वेमानम्। 'पुराणानि तदर्थानि सर्गेसर्गेऽन्यथैवतु। क्रियन्त इति। कालैकदेशोत्पत्तौ मानं सर्वे इति। प्रकृतेः स्वरूपतो जन्माद्यभावेऽपि महदाद्यात्मना विकारो अव्यक्तस्य प्रकृतेर्जन्मेत्यत्र विकार इत्येतन्मानम्। सर्वेऽपि वादिनो विरोधान्नित्यानित्यं न मन्यन्त इति पक्षं निराह॥ अत एवेति॥ आगमसिद्धत्वादेवेत्यर्थः।

श्री—तदुपपादनप्रकारमेव दर्शयति॥ शास्त्रीयेति॥ याः विधाः अत्रोत्प्रेक्ष्यन्ते ताः किं शास्त्रीयाः उत तद्भिन्ना एवेति विकल्प्याद्यपक्षस्योत्तरमुक्तं शास्त्रीयेति। द्वितीयस्योत्तरमन्यासामिति। तदर्थानीत्यनन्तरम्। 'सर्गे सर्गेऽन्यथैवतु। क्रियन्तेऽतस्त्वनित्यानि' इति वाक्यशेषो द्रष्टव्यः॥ विकार इति॥ महदाद्यात्मना परिणाम इत्यर्थः। ॥आगमेति॥ पुराणकालप्रकृतीनामनित्यत्वप्रतिपादकागमेत्यर्थः॥ अतएवेति॥ आगमबलादेवेत्यर्थः॥ विरोधोऽपीति॥ नित्यानित्यत्वयोरेकत्र समावेशाङ्गीकारे विरोध इत्यर्थः।

न तदा सत्वादि नाम। प्रकृतिरेवहि सोच्यते। इयञ्चसाम्यावस्थाप्रलयः। उक्तञ्च गीताभाष्ये "अव्यक्तस्याप्यन्यथाभावाख्यो विनाशोऽस्ति" इति। प्रमेयदीपिकायाञ्च "अन्यथाभावो वैषम्यपरित्यागेन साम्यावस्थापत्तिः"

इति ॥ प्रकृतेर्व्याप्तित्वं तु कार्यकारणात्मना। कार्यावस्थानप्रदेशे कार्यमेव वर्तते । न तु कारणप्रकृतिः । सा तु तदन्यदेश इत्येवं क्वचित्कार्यं क्वचित्कारणमित्येवं नमन्तव्यम् । किन्तु "कारणेषु स्थितं कार्यं व्याप्तं कार्येषुकारण" मिति गीतातात्पर्योदीरितरीत्या बोध्यम् । ननु परिमितस्य महदादिकार्यस्य कथं व्याप्तप्रकृतिगतत्वमितिचेत्। "अधश्चोर्ध्वं प्रसृतास्तस्य शाखाः" इत्याद्युक्तेः परिमितानामपि महदादीनां सूक्ष्मांशैः स्वकारणकार्यव्याप्तत्वसंभवात् । व्यक्तमेतद्गीताभाष्यप्रमेयदीपिकयोरित्यलम् ।

का—॥ अथवेति ॥ 'पुराणानितदर्थानि सर्गे सर्गेऽमुनैवतु ।
क्रियन्तेऽतस्त्वनित्यानितदर्थाः पूर्वसर्गवत्' ॥

इत्यादिवचनेन पुराणादेरुत्पत्तिमत्वावगमादिति भावः । न च पुराणादेः क्रमविशेषविशिष्टवर्णात्मकत्वात्क्रमस्य बुध्युपाधित्वाद्बुद्धेश्चेश्वरीयाया अनादित्वात् कथमनित्यत्वमिति वाच्यम् । एतत्कल्पीयव्यक्तिक्रमस्य पूर्वकल्पेष्वभावेन तदुपपत्तेः। उत्तरकल्पेषु तत्सद्भावस्य प्रमितत्वान्न विनाशित्वप्रसङ्ग इति बोध्यम् ।

स—ननु भावरूपाज्ञाने उत्पत्तिरहितत्वे सति विनाशित्वरूपविधान्तरस्य सत्वात् वेदावान्तरप्रभेदे उत्पत्तिमत्वेसति विनाशाभावरूपसामान्यधर्मेसति क्रमव्यत्यासाभावरूपविधान्तरसद्भावात्तत्कुतो मूलकृन्नोदाजहार। यदि च तयोर्न लक्ष्यता तर्हि तत्रातिव्याप्तिःस्यात् । किञ्च "मूलप्रकृतिरविकृति" रित्यादिसांख्याद्युक्तविधान्तरस्याप्यत्राकथनान्न्यूनतास्यादित्याशंक्य परिहरति ॥ नन्विति ॥ अवान्तरभेदैः पूर्वोक्तभेदकधर्मैः। उत्प्रेक्षितुं विना मानं बुध्या कल्पयितुम्। अविद्यायाः द्वितीये। वेदावान्तरप्रभेदस्य प्रथमेऽन्तर्भाव इत्यत्रैवान्तर्भाव इत्यर्थः । अत्र कण्ठतोऽनुक्तिस्तु तत्वविवेके पुराणस्येव बोध्या ॥ नैवमिति ॥ एतत् = व्यधिकरणत्वम् । यदीतिवाक्ये "विशिष्टशुद्धयो"रित्यपि पूरणीयम् । अत्यन्तभेदः तार्किकमत इव। अन्यत्र तत्वविवेके। उपपादितं पुराणादि येनांशेन नित्यं तमंशं नित्यवर्गे निधायेत्यादिनोपपादितमित्यर्थः । यद्वा "तन्तुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथं गतः" इत्यादिनान्यत्र गीतातात्पर्यादावुपपादितमित्यर्थः । तथाहि तन्तुसमूहे पट इति मतिर्जायते । अतोऽभेदः।

टी—नन्वत्र यस्योत्पत्त्यादिकं तदनित्यमेव । यस्य तु नास्ति तन्नित्यमेव । नित्यानित्यं क्वास्तीति । मैवम् । स्यादेतदेवम् । यद्यंशांशिनोः विकारविकारिणोर्वा अत्यन्तभेदःस्यात् । नचैवमित्य-न्यत्रोपपादितमिति । अनित्यं विभज्य दर्शयति ॥

**अनित्यं द्विविधं मतम् ॥८॥ असंसृष्टञ्च संसृष्टम् ।**

सम्यक् सृष्टं संसृष्टम् । अतथाभूतं असंसृष्टम् । सम्यक्ताया इयत्ता-भावात् त्रैविध्याद्यपि किं नस्यादित्यतो मतमित्युक्तम् । तद्व(च्चव)-क्ष्यामः । तत्रासंसृष्टं निर्दिशति ।

---

रा—अन्यत्रेति ॥ तत्त्वविवेकादौ ।

श्री—कालप्रकृत्योर्नित्यानित्यत्वमाक्षिपति ॥ नन्वत्रेति ॥ अत्र काले प्रकृतौ च अंशांशिनोरेकदेशैकदेशिनोः ॥ न चैवमिति ॥ तथा-चांशांशिनामभेदेन अंशस्य अनित्यत्वे तदभिन्नस्य नित्यस्यांशिनोप्य-नित्यत्वम् । विकारस्यानित्यत्वे तदभिन्नस्य नित्यस्याविकारिणः सूक्ष्म-भागस्याप्यनित्यत्वमिति नित्यानित्यवस्तुसिद्धिरिति भावः ।

रा—वक्ष्याम इति ॥ सूक्ष्मरूपेणेत्यादिनेति भावः ।

श्री—त्रैविध्याद्यपीति॥ नित्यानित्यवत्सम्यगसम्यक्सृष्टं किञ्चि-द्वस्त्वङ्गीकृत्येति भावः ॥मतमिति॥ मननविषयीकृतं युक्तियुक्तमितीति

---

नैकस्मिन्नेव तन्तौ तद्बुद्धिरिति भेदश्च । पूर्वोत्तरभावापन्ना अनेके करिण एव करिप्रवाह इति, एकस्मिन्करिणि न प्रवाह इति चाबाधितप्रतीते-र्भेदाभेद एकत्र प्रेक्षावदनुशिक्षितः संभवति । यथा वा अहिमूषकादीनां स्वभावतो विरोधिनां ऋष्याश्रमे मिश्रीभूयावस्थानं तथात्रापीति न विरोधः । अत्र च चेतनेऽचेतने च यावद्द्रव्यभाविनां धर्माणां धर्मिणाऽ-त्यन्ताभेदः । चेतन एवायं नियमः । अचेतने यावद्द्रव्यभाविनामपि भेदाभेदौ । नात्यन्ताभेद इति द्वौ पक्षौ । उभयत्रापि बहुमूलटीका-संमतेरिति ।

असंसृष्टं महानहम् ।

बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च ।

संसृष्टं निर्दिशति ।

संसृष्टमण्डं तदङ्गं च समस्तं सम्प्रकीर्तितम् ॥९॥

टी—नन्वेषां चतुर्विंशतितत्त्वानामसंसृष्टत्वं नाम यद्येकदेशेनोत्पत्तिस्तर्ह्यनुत्पन्नस्यासत्वादुत्पन्नमेव तत्त्वं तच्च संसृष्टमेवेति न द्वैविध्यं न च प्रकारान्तरमस्तीति । मैवम् । सूक्ष्मरूपेण नित्यानां महदादीनां प्रकृत्याद्यंशैरुपचयमात्रं क्रियत इति तान्यसंसृष्टानि । न चैवं ब्रह्माण्डं तदन्तर्गतानीति संसृष्टानि । एषामपि मूलरूपं नित्यमिति चेन्न । साक्षान्मूलरूपस्य विवक्षितत्वात् ।

---

यावत् ॥ तच्चेति ॥ द्वैविध्यं मतत्वञ्चेत्यर्थः ॥ वक्ष्याम इति ॥ नन्वेषां चतुर्विंशतितत्त्वानामित्यादिनानुपदमेवेति भावः । मूले मीयन्त इति मात्राः शब्दाद्याः विषया इत्यर्थः ।

रा—साक्षान्मूलरूपस्येति । तस्यैवोपचितत्वादिति भावः ।

श्री—संसृष्टभिन्नमसंसृष्टं किञ्चिद्वस्तु नास्त्येवेति नद्वैविध्यमित्याशङ्कते । नन्वेषामिति । अनुत्पन्नस्यासत्वादिति । अनुत्पन्नस्यैकदेशिनोऽभावादित्यर्थः । अयं भावः । असंसृष्टत्वं नाम किञ्चित्सृष्टं

---

का—॥ त्रैविध्यादीति ॥ किञ्चित्सम्यक्त्वातिसम्यक्त्वरूपप्रकारद्वयविवक्षायां त्रैविध्यं ततोऽधिकसम्यक्त्वादिविवक्षायां चातुर्विध्यादीत्यर्थः । मतमित्यस्य युक्त्यागमसम्मतमित्यर्थः ।

स—तदिति ॥ महान् महत्तत्त्वम् । अहं अहंकारतत्त्वम् । बुद्धिः बुद्धितत्त्वम् । मनः मनस्तत्त्वम् । खानि इन्द्रियाणि दश । खमिन्द्रियम् । 'इन्द्रियेऽपि खं' इति विश्वामरौ । पञ्चेति मात्रापदेन भूतपदेनचान्वेति । ते च शब्दस्पर्शरूपरसगन्धाः । भूतानि चाकाशवायुतेजोजलपृथिवीरूपाणि । एकान्वयभ्रमनिरासायाह । संसृष्टमिति । अण्डं—ब्रह्माण्डम् । तदङ्गं-ब्रह्माण्डान्तर्गतं भौतिकम् ।

टी—एवं सति महदादीनां नित्यानित्यत्वं कथं न स्यादिति चेत्स्यादेवं यदि सूक्ष्मरूपे महदादिव्यवहारःस्यात् किन्तु प्रकृतिरेव सोच्यते । केचिन्महदादिस्वरूपमेव नाभ्युपगच्छन्ति । दूरेणोक्तं

---

किञ्चिदसृष्टमिति एकदेशोत्पत्तिर्वा प्रकारान्तरं वा । नाद्यः । तथासति सर्वेषां महदादीनामुत्पन्नत्वस्यैव प्राप्तत्वेन संसृष्टत्वमेव स्यात् । उत्पन्नस्यैव संसृष्टशब्दार्थत्वात् । नचैकदेशोत्पत्तावपि एकदेशिनोऽनुत्पत्तेरुत्पन्नानुत्पन्नरूपत्वेनासंसृष्टत्वमिति वाच्यम् । एकदेशस्य एकदेश्यभिन्नत्वेन तदुत्पत्तौ तस्याप्युत्पत्तेः । तथा च अनुत्पन्नैकदेश्यभावेन सर्वं तत्त्वं सम्यक् सृष्टमेवेति किञ्चित् सृष्टं किञ्चिदसृष्टमित्येवंरूपासंसृष्टं नाम न किञ्चिदस्तीति न द्वैविध्यम् । न द्वितीयः । प्रकारान्तरस्यानिर्वचनादिति । येषां नित्यानि सूक्ष्मरूपाण्येव साक्षादुपादानानि तान्यसंसृष्टानि । येषान्तु विकृतान्येवोपादानानि तानि संसृष्टानीति द्वैविध्योपपत्तिरित्याशयेन समाधत्ते । सूक्ष्मरूपेणेत्यादिना । प्रकृत्याद्यंशैरिति । महत्तत्त्वसूक्ष्मरूपाणां प्रकृत्यंशैस्सत्वादिगुणैरुपचयः । आदिपदेनाहंकारसूक्ष्मरूपाणां महत्तत्त्वाद्यंशैरुपचयइत्यर्थः । नचैवमिति । सूक्ष्मरूपेण नित्यानां ब्रह्माण्डादीनामन्यांशैरुपचयः इत्येवंनहीत्यर्थः । किन्नाम प्रकृत्याद्यंशोपचितमहदाद्युपादानकान्येवेति भावः । ननु ब्रह्माण्डादीनामपि यत्परम्परामूलरूपं तस्य नित्यत्वादन्यांशैस्तस्योपचयमात्रमेवाङ्गीकृत्यासंसृष्टत्वमेव स्वीक्रियतां न संसृष्टत्वमित्याशयेन शङ्कते ॥ तेषामपीति ॥ मूलरूपं उपादानरूपम् ॥ विवक्षितत्वादिति ॥ नित्यत्वेनेतिशेषः । ब्रह्माण्डादौतु नैवम् । तत्र साक्षादुपादानभूतस्य विकृतस्य महदादेरनित्यत्वादिति भावः ।

श—केचिदिति ॥ तार्किकादयः । उक्तविशेषम् । असंसृष्टत्वादिकम् । उपसर्गद्वयार्थौ बहुतरेति ॥ अन्यत्रेति ॥

> ‘ पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
> एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ ’

इत्याद्यनुव्याख्यानादावित्यर्थः ।

विशेषम् । तेषामतिबहुतरागमविरोधं दर्शयितुं सम्प्रकीर्तितमित्युक्तम् । आगमाश्चान्यत्र द्रष्टव्याः । विस्तरभिया नेहोदाह्रियन्ते । यदीदं विष्णुव्यतिरिक्तं भावाभावादिभेदभिन्नं जगदस्वतन्त्रं तर्हि कस्मिन्नायत्तं

---

श्री—एवं सतीति ॥ महदादीनां सूक्ष्मरूपेण नित्यत्वादुपचितरूपेणानित्यत्वात् नित्यानित्यत्वमेव स्यान्नत्वनित्यप्रभेदरूपत्वमित्यर्थः ॥ व्यवहारः स्यादिति ॥ तथा च महत्पदाभिधेये न नित्यत्वमिति भावः । तर्हि तत्केन शब्देन वाच्यमिति पृच्छति ॥ किन्त्विति ॥ उत्तरमाह ॥ प्रकृतिरेवेति ॥ संप्रेत्युपसर्गद्वयाभिप्रायं वक्तुमाह ॥ केचिदिति ॥ संप्रेत्युपसर्गद्वयार्थोऽतिबहुतरेति । सं सम्यक् निश्चितप्राबल्यकबहुतरागमैरित्यर्थः । उक्तं विशेषं असंसृष्टत्वादिरूपं दूरेण नाभ्युपगच्छन्तीति संबन्धः । तथा च महदादितत्त्वस्वरूपस्याभावेन तस्यासंसृष्टत्वादिरूपो विशेषो दूरनिरस्त इति भावः ॥ आगमाश्चेति ॥

'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥'

इत्याद्या महदादिस्वरूपप्रतिपादकाश्चागमा भागवतादावुदाहृता द्रष्टव्या इत्यर्थः ॥ विस्तरभयादिति ॥ ग्रन्थविस्तरभयादित्यर्थः ।

रा—आयत्तमिति ॥ अधीनतया आस्त इत्यर्थः ॥ विषय इति॥ आयत्तमित्यनुषङ्गः । सृष्ट्यादेः प्रसिद्धत्वादन्येषामर्थमाह ॥नियम इति॥

---

का—आगमाश्चान्यत्र द्रष्टव्या इति ॥

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकञ्च पञ्चेन्द्रियगोचराः ॥
इन्द्रियेभ्यः पराह्यर्थाः अर्थेभ्यश्च परंमनः ।
मनसस्तु पराबुद्धिर्बुद्धेरात्मा महान्परः ॥
महतःपरमव्यक्तमव्यक्तात् पुरुषःपरः ।
पुरुषान्नपरं किञ्चित्साकाष्ठा सा परागतिः ॥

इत्यादयो द्रष्टव्या इति ।

कस्मिंश्च विषय इत्याकांक्षायामाह सृष्टिरिति । नियमो व्यापारेषु प्रेरणम्।

**सृष्टिःस्थितिः संहृतिश्च नियमोऽज्ञानबोधने ॥१०॥**
**बन्धो मोक्षः सुखं दुःखं आवृतिज्योतिरेव च ।**
**विष्णुनास्य समस्तस्य समासव्यासयोगतः ॥११॥**

बन्धःप्रकृतेः । मोक्षो बन्धात् । आवृतिज्योतिषी बाह्यतमःप्रकाशौ । एवकारो विष्णुनेत्यनेन सम्बध्यते । अस्य समस्तस्यास्वतन्त्रस्य भवन्तीति शेषः । नन्वेतत्पूर्वविरुद्धं समस्तस्य सृष्टिसंहारोक्तौ नित्यत्वोक्तिविरोधः । अचेतनस्य बोधविरोधइत्यादि । तत्रोक्तं समासेति । समासः संक्षेपः । व्यासो विस्तारः । तावेव योगौ उपायावुक्तार्थघटनायाम् ॥ तत इदमुक्तं भवति । उक्तधर्मेषु यत्र तत्त्वेऽल्पीयांसः

---

अत्र सृष्टिपदेन स्रष्टृनिष्ठव्यापारवाचिना जगन्निष्ठजन्मग्राह्यम् । स्थितिरन्नादिदानेन रक्षणम् । संहृतिः ध्वंसः । पूर्वविरुद्धतां व्यनक्ति ॥ समस्तस्येति ॥

श्री—क(स्मिन्नाय)स्यायत्तमिति॥ कस्याधीनमित्यर्थः । अधीनो निघ्नआयत्त इत्यभिधानात् । विषये आयत्तमिति वर्तते ॥ आहेति ॥ सृष्ट्यादौ विषये विष्ण्वायत्तमाहेत्यर्थः । प्रकृतेरिति पञ्चमी । बाह्यतमः अन्धकाराख्यम् । बाह्यप्रकाशः आलोकाख्यः । तथा चावृतिशब्देन बाह्यतमो ग्राह्यम् । ज्योतिःशब्देन बाह्यप्रकाशो ग्राह्य इत्यर्थः । ॥ भवन्तीति ॥ तथाचास्य समस्तस्यास्वतन्त्रप्रपञ्चस्य सृष्ट्याद्याः धर्माः द्वादश ज्योतिरन्ताः विष्णुनैव भवन्तीत्यर्थः ।

रा—इत्यादीति ॥ अचेतनस्य बन्धमोक्षसुखदुःखाज्ञानविरोध इत्यादिपदार्थः। मोक्षो बद्धस्य ॥इत्यादिद्रष्टव्यमिति॥ आवृतिज्योतिषी सर्वस्येत्यादिपदार्थः ॥अन्यतोपीति॥ब्रह्मादितोपीत्यर्थः ॥तत्तद्वस्त्विति॥ ब्रह्मादिवस्त्वित्यर्थः। यद्वा देशकालादिवस्त्वित्यर्थः । इत्यन्तेन तात्पर्योक्तिः ।

सम्भवन्ति तत्र तावन्तो विष्णवधीनाः ज्ञातव्याः । यत्र तु बहवस्तत्र तावन्तः । सर्वथा स्वरूपस्वभावावस्य तदधीनाविति ॥ तत्र स्थितिनियमौ सर्वस्य । सृष्टिसंहृती नित्यानित्यस्य अनित्यस्य च । अज्ञानं भावरूपं दुःखस्पृष्टस्य । ज्ञानाभावस्तु सर्वस्य । बोधनं चेतनस्य । सुखं प्राप्त-तमसो विना । दुःखं दुःखास्पृष्टं विनेत्यादि द्रष्टव्यम् । पदार्थानां सृष्ट्याद्यन्यतोऽपि प्रतीयते अत एवेत्युक्तम् । सकलसत्तादेस्तदधीन-त्वात्तत्तद्वस्तु निमित्तमात्रमेव । स्वातन्त्र्येण विष्णुरेवास्येश्वर इति ।

---

श्री—नित्यत्वोक्तिविरोध इति ॥ पञ्चाशद्वर्णाव्याकृताकाश-योरपि समस्तान्तर्गतत्वे तयोरपि सृष्टिसंहारापत्त्या नित्या वेदा इति नित्यत्वोक्तिविरोधः स्यादित्यर्थः । पदार्थान् वदन्नेव विग्रहं दर्शयति । ॥ समास इति ॥ उक्तार्थघटनायामिति ॥ समस्तप्रपञ्चविषयक-सृष्ट्यादिरूपोक्तार्थस्य घटनायामित्यर्थः ॥ तत इति ॥ तस्मात्समास-व्यासयोगत इत्यर्थः । समासव्यासयोगत इत्युक्तया शङ्कापरिहार इत्यत आह ॥ इदमुक्तं भवतीति ॥ केचित् तत इदमुक्तं भवतीत्येकमेव वाक्यम् । तथा च समासव्यासलक्षणादुपायादिदं समस्तस्योक्तं सृष्ट्या-दिकं भवति । घटते । उपपन्नमित्यर्थ इत्याहुः । समासव्यासप्रकारमेव दर्शयति ॥ उक्तधर्मेष्विति ॥ अज्ञानं भावरूपमिति ॥ भावरूपा-विद्येत्यर्थः । नन्वत्राज्ञानं ज्ञानाभावरूपमेव किं न स्यादितिचेत् ।

---

स—॥ तदधीनत्वादिति ॥ तदधीनत्वात् विष्णवधीनत्वात् । तद्वस्तु ब्रह्मादिरूपम् । निमित्तमात्रम् । नतु स्वतन्त्रम् । तर्हि ब्रह्मादीनां स्रष्टृत्वप्रतिपादकागमानां का गतिरिति चेन्न ।

'ब्रह्मणिस्थोऽसृजद्विष्णुः स्थित्वारुद्रेत्वभक्षयत् ।
पृथक्स्थित्वा जगत्पाति तद्ब्रह्माद्याह्वयोहरिः ।
ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवेस्थितः ।
स ब्रह्मणा विसृजति स रुद्रेण विलापयति ।
निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।
हिरण्यगर्भःशर्वश्च कालाख्यारूपिणस्तवे'त्यादिप्रमाणादिति भावः ।

उच्यते। 'अनादिमायया सुप्तः' इत्यादिश्रुत्या 'अनाद्यविद्याबद्धत्वाज्जीवा जानन्ति नो हरिम्' इत्यादि स्मृत्याचाविद्यायाः ज्ञानावरकत्वमुच्यते। आवरकत्वञ्चाभावस्य न युक्तमित्यावरकत्वान्यथानुपपत्त्या तस्य भावरूपत्वसिद्धिरिति ज्ञातव्यम्। अत्र प्रसङ्गात्किञ्चित्तत्त्वरहस्यमुच्यते। इयञ्च भावरूपाविद्या सत्वादिगुणात्मिका प्रकृतिरेव। तस्याश्चाविद्यात्वं स्वरूपज्ञानावरकत्वेन विद्याविरोधित्वात्। यथोक्तं सुधायाम्। 'अतः कामकर्मातिरिक्तं मायाविद्याप्रकृतिरित्यादिशब्दभिधेयमनाद्येव किमपि द्रव्यं स्वरूपचैतन्यावरकमङ्गीकार्यं' इत्युक्त्वा 'अतः परमेश्वर एव सत्वादिगुणमय्या विद्याविरोधित्वेनाविद्यया स्वाधीनया प्रकृत्या अचिन्त्याद्भुतया स्वशक्त्याच स्वप्रकाशमपि जीवस्वरूपचैतन्यमाच्छादयतीति युक्तम्' इति। इयं च भावरूपाविद्या लिङ्गशरीरमेवेति बहवस्तात्त्विकाः। तेषां स्पष्टः सुधाविरोधः। यथोक्तं सुधायां फलाध्याये कर्मक्षयपादे 'भगवदपरोक्षज्ञानभोगाभ्यां निवृत्तसमस्तकर्माणो भिन्नलिङ्गशरीराः विध्वस्तप्रकृतयः' इति। अत्र सत्वादिगुणात्मकप्रकृतिबन्धध्वंसात्पार्थक्येन लिङ्गशरीरभङ्गस्योक्तत्वात्। एवञ्च जीवस्वरूपस्य षडावरणानि। तथाहि। सत्वादिगुणात्मिका भावरूपाविद्या। 'बध्नन्ति नित्यदा मुक्तं मायिनं प्रकृतिं गुणाः' इति भागवतोक्तेः।

तथा कामः।

'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय' इति गीतावचनात्॥
'तथा काम निरुद्धोऽयं उच्चावचतया भ्रमन्।'
इति भागवतोक्तेश्च।

प्रारब्धकर्म।

'अनादिकर्मणा बद्धो जीवः संसारमण्डले।
वासुदेवेच्छया नित्यं भ्रमतीतिहि तद्वचः'॥
इत्यनुव्याख्यानोक्तेः।
'सदा बद्धाः इमे जीवाः अविद्याकामकर्मभिः'॥
इति वचनाच्च।

स्वगुणाच्छादिकपरमाच्छादिकरूपे द्वे दुष्टे प्रकृती ।

‘ अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते ।
स्वगुणाच्छादिकात्वेका परमाच्छादिका परा ’ ॥
इति प्रमाणोक्तेः ।

तथा लिङ्गशरीरम् ।

‘ एवं पञ्चविधं लिङ्गं त्रिवृत्षोडशविस्तरम् ।
एषचेतनया युक्तो जीव इत्यभिधीयते ।
अनेन पुरुषो देहान् उपादत्ते विमुञ्चति’ इत्यादि भागवतोक्तेः ॥

स्पष्टञ्चैतत्सर्वमुक्तं प्रथमस्कन्धतात्पर्ये पञ्चदशाध्याये

‘ प्रकृतिं स्वात्मसंश्लिष्टां गुणान् सत्वादिकानपि ।
कर्माणि सूक्ष्मदेहञ्च जायमाना हरेर्दृशिः ॥
दहेत्तथापि संदग्धेन्धनवत्तत्पुनःपुनः ।
यावदारब्धकर्मस्यादाविर्वापि तिरोव्रजेत् ’ इति ॥

व्याख्यातमेतदस्मदाचार्यैः ।

अत्र प्रकृतिशब्देन स्वगुणाच्छादिकादिरूपा दुष्टजडप्रकृतिरेव विवक्षिता । सत्वादिकान् गुणानपीत्युक्त्या सत्वादिगुणरूपा जडप्रकृतिरपि भावरूपा अविद्याख्या जीवस्वरूपाच्छादिकास्तीति सूचयति । कर्माणि प्रारब्धानि । सूक्ष्मदेहं लिङ्गशरीरमिति । अत्र अपिशब्देन वा चशब्देन वा कामोऽपि ग्राह्यः । इदमावरणषट्कमपरोक्षज्ञानभोगाभ्यांविनाश्यम् । कर्मातिरिक्तमावरणपञ्चकमपरोक्षज्ञानविनाश्यम् । प्रारब्धं कर्मच भोगविनाश्यम् । ज्ञानेनतूपमर्द इति ज्ञातव्यम् । ईश्वरेच्छापि पूर्वोक्तषट्कातिरिक्तं सप्तममावरणम् । ‘ परमेश्वरो अचिन्त्याद्भुतया स्वशक्त्या जीवस्वरूपचैतन्यमाच्छादयति’ इति सुधोक्तेः । तथा चापरोक्षज्ञानानन्तरमावरणषट्कानां दाहेऽपि दग्धपटायमानतया आविर्भावतिरोभावाभ्यामनुवृत्तानामेषां विरजास्नानेन निश्शेषनाशः । अनन्तरं प्रलये भगवदुदरे स्थित्वा बहुतरानन्दभोक्तॄणामेषां सृष्ट्यनन्तरं श्वेतद्वीपाविर्भावे सति तत्रत्यश्रीनारायणसन्दर्शनानन्तरमपरोक्षज्ञानोत्तरानुष्ठितं निवृत्तं

कर्म निमित्तीकृत्य प्रसन्नो भगवान् स्वेच्छावरकमपसारयति । ततश्च यावत्स्वरूपानन्दाविर्भावो भवति । अत्र च बहुनात्र किमुक्तेनेति वाक्यं मानम्। स्वेच्छावरकान्नमुक्तःस्यादिति व्याख्यानात्। उक्तश्च सुधायाम्। आनन्ददश्चमुक्तानामित्यत्र । 'ननु आनन्दः स्वरूपमेव । सच अविद्यावृतो अविद्यानिवृत्तौ स्वतः सिद्ध एव । ततः कथं मोक्षदानात् पृथगानन्ददानम् । उच्यते । परमेश्वरशक्तिरेव जीवस्वरूपानन्दावरणं मुख्यम् । अविद्यातु निमित्तमात्रम् । ततोऽविद्यायां निवृत्तायामपि नाशेषानन्दाभिव्यक्तिः यावदीश्वर एव स्वीयां बन्धशक्तिं न ततो व्यावर्तयति' इति। उक्तश्च गीताभाष्यटीकायाम्। 'नाविद्यैव जीवस्वरूपावरणम्। किन्त्वीश्वरेच्छापि' इत्यादि । अत्राज्ञानशब्देन ज्ञानाभावोऽपि विवक्षित इत्याह ॥ज्ञानाभावस्त्विति॥सर्वस्येति॥ परतन्त्रस्येत्यर्थः । रमाया अपि यावद्गुणगणविषयकज्ञानाभावसद्भावादिति भावः । एवकारस्य विष्णुनेत्यनेन संबन्धः पूर्वमुक्तः । तदभिप्रायमाह ॥ पदार्थानामिति ॥ अन्यतो ब्रह्मादेः कुलालादेश्चसकाशादित्यर्थः ॥ प्रतीयत इति ॥ आगमेन प्रत्यक्षेणचेत्यर्थः । तथा च विष्णुनैवेत्युक्तमयुक्तमिति भावः । विष्णुनैवेत्युक्तया कथं तत्परिहार इत्यत आह ॥ सकलेति ॥ तत्तद्वस्तु ब्रह्मादि ॥ निमित्तमेवेत्यादि ॥

'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।
हिरण्यगर्भः शर्वश्च कालाख्या रूपिणस्तव ॥

तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन् ।
एक एव महाशक्तिः कुरुते सर्वमञ्जसा ॥

ब्रह्मणिस्थोऽसृजद्विष्णुः स्थित्वा रुद्रेत्वभक्षयत् ।
पृथक्स्थितो जगत्पाति तद्ब्रह्माद्याह्वयोहरिः ' ॥

इत्यादि प्रमाणबलादन्येषां निमित्तमात्रत्वम् । स्वातन्त्र्येणान्यानपेक्षतया विष्णुरेवास्य समस्तस्य प्रपञ्चस्य सृष्ट्यादिविषये ईश्वरः समर्थ इत्यवगन्तव्य इत्यर्थः ।

टी—पद्मा पद्मासनानन्तप्रभृतीदं यदिच्छया ।
सत्तादिलभते देवः प्रीयतां श्रीपतिस्समे ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्त्वसङ्ख्यानविवरणं श्रीमज्जयतीर्थभिक्षुविरचितं सम्पूर्णम् ।

॥ श्रीकृष्णार्पणमस्तु ॥

---

रा—अस्य समस्तस्येति मूलस्थेदंशब्दार्थं विवृण्वन् जगदुपादानतया सर्वस्य जन्मादिकर्तृत्वभ्रमं वारयंस्तत्प्रीतिं प्रार्थयते ॥ पद्मेति ॥ पद्मासनो ब्रह्मा । यदिच्छयेत्यनेनोपादानत्वनिरासः । अनायाससाध्यत्वञ्च सूच्यते । इच्छामात्रं प्रभोः सृष्टिरित्युक्तेः । तेन फलाभावेऽपि सृष्ट्यादिर्युक्तः । आयाससाध्यकर्मण एव फलापेक्षणादित्युक्तं भवति । मूलोक्तसृष्टिशब्दार्थः सत्तेति । तेन सापि सर्वविषयेति सूचितम् । देव्या अपि प्रीतिप्रार्थनाल्लाभायोक्तम् । श्रीपतिरिति ॥

तत्त्वाभिमानिनो देवाः ब्रह्मरुद्रपुरस्सराः ।
यत्परीवारतामाप्तास्तं वन्दे कमलापतिम् ॥

इति श्रीमत्तत्त्वसंख्यानटीकाभावदीपः श्रीसुधीन्द्रश्रीपादशिष्यश्रीराघवेन्द्रयतिविरचितः सम्पूर्णः ॥

श्री—समापितग्रन्थो भगवान् टीकाकारोऽन्तेऽपि मङ्गलमाचरति ॥ पद्मेति ॥ लक्ष्मीःपद्मालयापद्मेत्यभिधानात् । पद्मा महालक्ष्मीः । पद्मासनो ब्रह्मा ।

---

सु— एवं समापितग्रन्थो भगवांष्टीकाकार एतत्प्रकरणप्रतिपादितगुणवत्त्वेन भगवन्तं स्तुवन् एतत्प्रकरणविवरणफलत्वेन स्वस्यैकान्तभक्तत्वमविदुषो जनान् जननी तनयमिव बोधयन्स्तत्प्रीतिमाशास्ते ॥ पद्मेति ॥ इदं–विश्वं । सत्ता असतः कार्यरूपेण भवनस्यैव जनित्वात् जनिः सत्ताशब्देन गृह्यते । तथा च सा आदिः यस्य सृष्ट्याद्यष्टकस्य तत्तथा । ननु पद्माप्रभृतीत्येवोक्तौ सर्वलाभे किमर्थं पद्मासनानन्तग्रहणम् । यदि दुःखस्पृष्टतदस्पृष्टभेदाख्यावान्तरविशेषसूचनाय तद्ग्रहस्तर्हि पद्मापद्मासनप्रभृतीत्येव मुखतो वाच्यं स्यात् । न वाच्यं चानन्तेति । अथ

श्री—अनन्तः शेषः। एतदाद्यमिदं विश्वं यदिच्छया सत्तादिकं लभते। सत्तादीत्यादिपदेन प्रमितिप्रवृत्त्योर्ग्रहणम्। यादृशस्य भगवतः प्रतिपादनमस्मिन् प्रकरणे कृतं तादृशस्यैव प्रीतिराशासनीयेत्याशयेनैवमुक्तम्। सदेवः श्रीपतिः श्रीहरिः। कमला श्रीहरिप्रियेत्यभिधानात्। श्रीर्महालक्ष्मीस्तत्पतिर्भगवान् विष्णुः मे प्रीयतामित्यर्थ इत्यशेषमतिमङ्गलम्॥

यादवाचार्यहृत्पद्मगतश्रीमध्वहृद्गतः।
प्रीयतामनया ग्रन्थकृत्या श्रीबादरायणः॥
लौकिकालौकिकफलं दातारं भजतां सदा।
गुर्वनुग्रहरूपं तं मन्दारमहमाश्रये॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितं तत्त्वसङ्ख्यानविवरणं सम्पूर्णम्।

---

तत्तद्व्यक्तिग्रहोऽपेक्षित इत्युपादानं। हन्ततर्हि पुरुषायुषादपर्यवसानं स्यात्। तस्मात्कथमेतदितिचेन्न। केचिदनन्तविष्वक्सेनादीन्नित्यादुःस्वानाचक्षते। तन्मतमतन्द्रितः पराकर्तुमनन्तेति समाधिसम्भवात्। तर्हिपूर्वानुपूर्व्यां "गरुडानन्तविष्वक्सेनादीन्" इति गरुडस्यैव प्रथमं ग्रहणादत्रयदितन्मततोद् आवश्यकस्तर्हि गरुड एवादौ निर्देश्य इति चेन्न। कश्चिद्विपश्चिदपश्चिमो बलमलपदृशावतार्यां 'हलंकलयत' इति। तन्निराकर्तुमपारमतिर्जग्राह तदात्मकमनन्तं यतोऽत इति। अथवा पद्मापद्मासनादयो भवन्तु तदधीना अमुक्ताः। मुक्तास्तु "निरञ्जन" इत्यादिश्रुतेः नतदधीना इत्यतः प्रायोजि 'अनन्ते'ति। ततश्च पद्मापद्मासनौ अनन्तौ अबद्धौ=मुक्ताविातियावत्। अनन्तौ पद्मापद्मासनौ। कडाराः कर्मधारय इति विशेषणस्य परनिपातः। तौ प्रभृती यस्य तत्तथा। रमाया नित्यमुक्ताया ब्रह्मादीनामपि मुक्तानां तदधीनत्वे "उतामृतत्वस्येशानः सर्वं तत्प्रज्ञानेत्रं द्वावेतौ नित्यमुक्तौ। अव्यक्तात्पुरुषः परः। श्रीर्यत्ररूपिण्युरुगायपादयोः चरणरजउपास्ते यस्य भूतिर्वयं काः" इत्याद्यागमा द्रष्टव्याः। अति बन्धन इति धातोरन्तेतिरूपम्। श्रीपतिः। श्रीर्मङ्गलदेवतेत्यशेषमतिमङ्गलम्।

# Glossary of terms occurring in the work with English Equivalents

| | |
|---|---|
| अचेतनः | (the) insentient,<br>(the) unconscious |
| अतीन्द्रियम् | (the) supersensuous, (the) supersensible, beyond the senses. |
| अत्यन्ताभावः | absolute non-being, |
| (सदाभावः) | absolute non-being |
| अधिष्ठानम् | substratum, substrate,<br>seat, basis |
| अध्याहारः | supplying an ellipsis |
| अनवस्थितिः | infinite regress. |
| अनारोपितम् | the non-superimposed.<br>what is not superimposed. |
| अनित्यम् | the non-eternal. |
| अनुबन्धचतुष्टयम् | topic, benefit, fit person and connection. Every Sāstra must have a subject for treatment, some specific benefit to be derived from it, a person fit for its study and connection between these. |
| अन्योन्याभावः | mutual non-being, mutual non-existence, reciprocal non-being, reciprocal non-existence. |
| अभावः | non-being, non-existence.<br>negation, absence. |
| अवधिः | limit. |
| अविप्रतिपन्नोऽर्थः | settled matter, undisputed meaning. |
| अव्याकृताकाशः | the (unchanging) absolute space. |
| अंशः | part. |
| अंशी | that which has parts. |

| | |
|---|---|
| असंसृष्टम् | not-wholly-created. |
| अस्वतन्त्रम् | the dependent. |
| आत्माश्रयः | self-dependence. |
| आरोपः | superimposition. |
| आवृतिः | external darkness. |
| इष्टम् | the desired, the agreeable. |
| उद्देशः | naming, mentioning by name. |
| उन्मज्जनम् | the coming up of what was below the surface. |
| उपादानकारणम् | material cause. |
| एकादशेन्द्रियाणि | the eleven organs. they are the mind, the five sense organs and the five organs of action. |
| कूटस्थत्वम् | unchangeability. |
| चतुर्विंशतितत्त्वानि | the twenty-four categories. |
| ज्योतिः | outside light. |
| तत्त्वम् | the unsublated, the non-superimposed, object of valid knowledge. |
| तत्त्वसङ्ख्यानम् | enumeration of categories. |
| तमोगाः | those fit to reach the eternal dark region. |
| तारतम्यम् | gradation. |
| दुःखसंस्थाः | those in sorrow. |
| दुःखस्पृष्टम् | touched by sorrow(sometime or other). |
| दुःखास्पृष्टम् | never touched by sorrow (Ramā). |
| दृष्टान्तः | illustration. |
| धर्मः | quality, attribute. |
| धर्मी | that which has attributes, a thing. |
| नित्यम् | the eternal |
| नित्यमुक्तः | ever free from bondage. |
| नित्यानित्यम् | the eternal-noneternal. |
| नित्यसंसारिणः | the ever-bound. |

| | |
|---|---|
| नियमनम् | impelling in action. |
| निरवधिकः | unsurpassed, limitless. |
| निरूपणम् | explanation, exposition. |
| निःश्रेयसम् | release from bondage, mukti. |
| परिभाषा | technical term. |
| परीक्षा | examination, enquiry, investigation |
| पारतन्त्र्यम् | dependence. |
| पारिभाषिकम् | technical. |
| पुनरुक्तिः | repetition. |
| प्रकरणम् | monograph. |
| प्रकृतिः | the material cause of the world, also its presiding deity, namely Ramā. |
| प्रतिक्षेपः | repudiation, rejection. |
| प्रतीतिः | knowledge, cognition. |
| प्रध्वंसाभावः | destruction, non-being, subsequent non-being. |
| प्रमाणम् | valid knowledge, means of valid knowledge. |
| प्रवृत्तिः | activity, effort. |
| प्रेक्षावान् | discriminating person, the wise one. |
| प्रागभावः | antecedent non-being, prior non-being. |
| प्रामाणिकाः | the proof-guided, the proof-minded. |
| पौरुषेयग्रन्थाः | Human compositions (or more generally) works composed by conscious beings. |
| भक्तिः | loving devotion. |
| भ्रमः, भ्रान्तिः | wrong cognition, illusion. |
| भावः | being, existence, existent. |
| मङ्गलम् | salutation or prayer addressed to a Deity |
| मुक्तः | one released from bondage. |
| मुक्तिः | release from bondage. |
| मुक्तियोग्यः | one fit for release. |

मुक्त्ययोग्यः — one not fit for release.

मुमुक्षुः — one who desires release from bondage.

मात्राः — objects of sense.

लक्षणम् — distinguishing quality or mark, definition.

विभागः — classification, division.

व्यवस्था — settlement, conclusion.

व्यष्टयः — the released, (Viśiṣṭādvaita.)

व्याघातः — contradiction.

व्यासः — expansion.

विपर्ययः — wrong knowledge.

विप्रतिपत्तिः — opposition (as of opinions) divergence of opinion

विशेषणम् — attribute, quality.

विक्षिप्य — scatteredly.

शास्त्रम् — a treatise on a definite subject such as grammar, logic etc.

सत्कार्यवादः — the view that the effect exists in the cause even before its production.

समष्टयः — the unreleased. (S. T.) (viśiṣṭādvaita)

समासः — abridgement, contraction.

सर्वज्ञः — Omniscient.

सिद्धान्तः — conclusion arrived at after enquiry.

सृतियुक् — one in bondage.

सृष्टिः — creation.

सङ्ग्रहः — epitome.

स्वरूपम् — the essence of a thing.

स्थितिः — protection.

संसृष्टम् — well-created or wholly-created.

संहृतिः — destruction.

# शुद्धाशुद्धपत्रिका

## ERRATA

| *page* | *line* | *for* | *read* |
|---|---|---|---|
| xiii | last line | reasoning | mere reasoning |
| १३ | १४ | व्यावृत्यै | व्यावृत्त्यै |
| २० | १३ | प्रवत्योः | प्रवृत्त्योः |
| ३७ | ९ | मेव | मेवाभावो |
| ४० | २० | निवृत्यै | निवृत्त्यै |
| ६१ | १८ | कार्य | कार्यं |
| ६१ | २१ | द्व्याख्यान | द्व्याख्यान |
| ७० | ५ | मित्युकम् | मित्युक्तम् |

# OTHER PUBLICATIONS

| | | Price Rs. | P. |
|---|---|---|---|
| 1. | **श्रीसुमध्वविजयः** ....<br>(छलारिव्याख्यासहितः)<br>Śrī Sumadhva Vijaya<br>with Chalāri commentary. | 6 | 00 |
| 2. | **श्रीविष्णुतत्त्वविनिर्णयः** ....<br>श्रीमज्जयतीर्थटीकासहितः<br>Śrī Viṣṇutattvavinirṇaya<br>with the Tīkā of Jayatīrtha | 2 | 50 |
| 3. | **सरसभारतीविलासः** ....<br>श्रीवादिराजविरचितः<br>कर्णाटकानुवादसहितः ।<br>Sarasabhāratīvilāsa<br>of Śrī Vādirājatīrtha<br>with Kannada Translation and Notes | 1 | 50 |
| 4. | **माध्ववैष्णवत्रिकालसन्ध्यावन्दनविधिः** | | |
| | **प्रथमो भागः** (ऋग्वेदीयः) | 0 | 50 |
| | **द्वितीयो भागः** (यजुर्वेदीयः)<br>Mādhva Vaiṣṇavatrikālasandhyā-<br>vandanavidhi I Part (Ṛgvedīya)<br>II Part (Yajurvedīya) | 0 | 50 |
| 5. | **श्रीमद्भागवतकथासारः** ....<br>(कर्णाटकभाषायाम्)<br>Śrīmadbhāgavatakathāsāra<br>(Kannada) | 0 | 12 |
| 6. | **विशेषनिरूपणम्** ....<br>Viśeṣanirūpaṇa (Kannada) | 0 | 10 |

*Copies can be had of*

Śrī B. S. Pranesa Rao
Secretary, Committee of Management
4, Model House Second Street
Bangalore-4.